रघुनाथरथ-विरचिता

# नाट्य-मनोरमा

प्रथमसंस्करणम्



१९५९

ओड़िशा साहित्य एकाडेमीपक्षतः प्रकाशिता

मूल्यं रूप्यकद्वयम्

मुद्राकरः
पंडित अनसूयाप्रसाद पाठकः
राष्ट्रभाषा समवाय मुद्रणालये मुद्रितम्

# PREFACE

The **NĀTYAMANORAMĀ** is a treatise on the science of music and the present text is based on a palm-leaf manuscript preserved in the Orissa State Museum, Bhubaneswar. It is known from the concluding verses of the last Chapter ( pp. 71-72 ) that the author, Raghunatha Ratha, composed the Natyamanorama under the patronage of King Nilakantha of Kerala.

Raghunatha further states that he was a contemporary of Gajapati Divyasimha ( King of Orissa—1693-1720 A.D.) and that he began the work on the full-moon day of Chaitra month during the 11th Anka of his reign, which corresponds to 1702 A. D. It was completed in the month of Chaitra in the 12th Anka of Divyasimha as is evident from the last stanza of the last chapter.

In the last quatrain of the 1st of the Slokas at page 72, the Natyamanorama has been described as " संगीतार्णव-चन्द्रिकान्तरगता " i.e. it is based on ( or rather included in ) " संगीतार्णवचन्द्रिका ", which Raghunatha had completed before he composed the Natyamanorama. · This is corroborated by a similar statement found in the " चूर्णिका " ( p.1 ) in which the author introduces himself to his readers.

The Natyamanorama may, therefore, be taken to be a compendium of " संगीतार्णवचन्द्रिका ", either in respect of some portions dealing in detail with the topics discussed in the present text or of the whole work.

Raghunatha has not mentioned anything about the place of his birth but apparently, he belonged to Orissa because he has used ' Anka ' or the year of reign of the then King of Orissa. Further, he has referred to authors of works of Orissa such as Raya Ramananda, Harinayak, the author of संगीत रत्नमाला, Krishna Dasa ( the author of गीत प्रकाश and the court-poet of Mukunda Deva, King of Orissa) and Purushottama Mishra.

It is not known how he secured the patronage of the King of Kerala. It may be that in search of learning, he went over to Kerala where he secured the patronage of the King of Kerala or he might have interested the King of Kerala with his learning when the King came to Puri on pilgrimage. Whatever be it, the author of the treatise has made a distinct contribution to the literature on music in India.

the 25th August, 1959

( H. MAHTAB )
*Chief Minister, Orissa.*

# भूमिका

नाटचमनोरमाख्योऽयं ग्रन्थः संगीततत्त्वविषयकः क्षुद्रनिबन्धः। भुवनेश्वरस्थितायां "ओड़िशा-राज्यसंग्रहशालायां सुरक्षितात्तालपत्र-पुस्तकादुद्धृतः निबन्धस्यास्य पाठः। ग्रन्थस्य शेष 'पादे' उपसंहारात्मकेभ्यः श्लोकेभ्यः ( पृ· ७१-७२ ) केरलनरपतेः नीलकण्ठस्य प्रोत्साहेन रघुनाथरथेन विरचितेयं नाटचमनोरमेति ज्ञायते।

उत्कलनरपतेः गजपतिदिव्यसिंहस्य ( ख्री. १६९३-१७२० ) एषो रघुनाथः समसामयिक इति तेनैव समुल्लिखितं नाटचमनोरमायाम्। पुनः दिव्यसिंहस्य एकादशेऽङ्के ( ख्री· १७०२ ) चैत्रपूर्णिमायां निवन्धस्यास्य निर्माणं समारब्धम्, तस्यैव नरपतेः द्वादशाङ्के चैत्रेमासे तत्समापितमिति तेनैव स्पष्टमुट्टङ्कितम् ( पृ· ७२ )।

अपि च "अङ्के भर्गमिते" इति श्लोकस्य ( पृ· ७२ ) चतुर्थे पादे नाटचमनोरमेयं "संगीतार्णवचन्द्रिकान्तरगता" इति वर्णिता। अतः तेनैवग्रन्थकारेण "संगीतार्णवचन्द्रिका" नामधेयो महानिवन्धः नाटच-मनोरमायाः रचनात्प्रागेव प्रणीत इति प्रतिभाति। एतदपि प्रथम "पाद"स्य चूर्णिकायाः ( पृ· १ ) रघुनाथस्य एतद्ग्रन्थप्रणयनहेतुकथनात्मिकायाः निवेदनात् समर्थितं च भवति। अतएव, 'संगीतार्णवचन्द्रिकाऽन्तर्गतानां कतिपय प्रकरणानां सर्वेषामालोच्यविषयाणां वा नाटचमनोरमेयं सारसंक्षेप-रूपिणीति विवेकः नालीकः।

ग्रन्थकारेण रघुनाथेन स्वजन्मस्थानविषये किमपि नोल्लिखितम्। परन्तु, उत्कलाधिपस्य दिव्यसिंहस्य 'अङ्क' मधिकृत्य निबन्धस्यास्य निर्माण-समाप्ति-काल-निर्देशात् तस्य उत्कलीयत्वमनुमीयते। कथमितिचेत् उत्कलीयनरपतीनां राज्यशासन-कालान्तर्गत-वर्षगणनायां 'अङ्कगणना'—

रीतिः चिरप्रचलिता सुप्रसिद्धाच । अनुमानस्यास्य आनुसङ्गिकं प्रमाणमपि तत्रोपलभ्यते नाटचमनोरमायाम् । तद्यथा—निबन्धेऽस्मिन् रघुनाथेन वहूनामुत्कलीयानां ग्रन्थकाराणामुल्लेखः कृतः—राय रामानन्दः, 'संगीत-रत्नमाला' कारः हरिनायकः, उत्कलनरपतेः मुकुन्ददेवस्य सभाकविः 'गीत प्रकाश' प्रणेता कृष्णदासः, पुरुषोत्तममिश्रश्च ।

केरलनरपतेः प्रोत्साहः निबन्धकारेण कथं लब्धः, तन्नज्ञातमस्माभिः । तथापि, ज्ञानपिपासया रघुनाथस्य केरलगमनानन्तरं राजानुग्रहः संप्राप्तः, अथवा केरलाधिपस्य तीर्थपर्यटनप्रसङ्गे श्रीक्षेत्रगमनावसरे स्वकीयेन ज्ञानवैभवेन तेनैव रघुनाथेन तस्य शुभदृष्टिः समाकृष्टेति अनुमानद्वयं नामूलकं प्रतीयते । तद्यथा भवतु, भारतीयसंगीतसाहित्यं प्रति निवन्धकारस्य महद्दानं सर्वथा स्वीकार्यमिति ।

*हरेकृष्ण महताव्*
मुख्यमन्त्री—ओड़िशा

# ACKNOWLEDGMENT

We have great pleasure in presenting this small treatise on music to the world of scholars working particularly in the domain of oriental studies. Thanks are due to Shri Kedaranatha Mahapatra, Curator of the Orissa State Museum who acquired a manuscript of the **"Natyamanorama"** in 1952 from Puri and also to Shri Prananatha Mahanti. M. A., I.A.S., Secretary to the Government of Orissa, Education Department. who brought it to light a couple of years ago. We are highly grateful to Dr. H. K. Mahtab, Chief Minister, Orissa and the President of the Orissa Sangeet Natak Akademi but for whose keen interest and able guidance the publication of this treatise could not have been possible. The value of this work has been enhanced by the learned preface of Dr. Mahtab, whose love for learning and patronage of scholarship is well-known throughout India.

It is hoped that all lovers of music in general and of Sanskritic studies in particular will appreciate this attempt of the Orissa Sahitya Akademi conducive to the promotion of oriental learning.

NEW CAPITAL,
BHUBANESWAR
the 26th August, 1959

**Gourikumar Brahma,**
*Secretary*
ORISSA SAHITYA AKADEMI

# विज्ञप्तिः

संगीततत्त्वविषयिण्याः नाट्यमनोरमायाः प्रकाशनं भृशं प्रीतिकरमस्माकम्। प्राच्यविद्यापरिशीलनपटूनां विदुषां कृते निबन्धस्यास्य प्रकाशनं मुख्यत उद्दिष्टम्। ओड़िशाराज्यसर्वकाराणां भुवनेश्वरस्थितायाः संग्रहशालायाः 'क्युरेटर' - पदभाजः श्री केदारनाथ महापात्रमहोदयाः प्रसंगेऽस्मिन् धन्यवादार्हाः, यतः ख्रीष्टीये १९५२ तमेऽब्दे तैरेव प्रथमतः नाट्यमनोरमायाः तालपत्रग्रन्थः श्रीक्षेत्रतः समुपलब्धः। अपि च ओड़िशा राज्यसर्वकाराणां शिक्षाविभागीय-'सेक्रेटरी' महोदयाः—श्री प्राणनाथ महान्ति एम्. ए., आइ. ए. एस्. महाशयाः साधुवादार्हाः; यतः तेषां प्रयत्नेनैव नाट्यमनोरमेयं लोकलोचनगोचरतां गता। वयं तु ओड़िशा राज्यमुख्यमन्त्रिणः (येऽपि शिक्षामन्त्रिणः), तथा ओड़िशा संगीत-नाटक-एकाडेमी इति नाम्ना प्रख्यातस्य अनुष्ठानस्य सभापतीन् डक्टर हरेकृष्ण महताबमहोदयान् प्रति नितरां कृतज्ञाः; तेषां गभीराग्रहेण वलिष्ठनिर्देशेन च विना नाट्यमनोरमायाः प्रकाशनं दुःसाध्यं स्यात्। डक्टर महताबमहोदयानां तत्त्वपूर्णेन अग्रलेखेन निबन्धस्यास्य मूल्यं बर्द्धितेतराम्, यतः तेषां विद्यानुरागित्वं विद्वत्पृष्ठपोषकत्वञ्च सर्वत्र सुविदितमेव भारतवर्षे।

'ओड़िशा साहित्य एकाडेमी' इति नाम्ना प्रख्यातस्य अनुष्ठानस्य एष उद्यमः सर्वेषां संगीतप्रियाणां प्राच्यविद्यानुरागिणां च अभिनन्दनीयो भवेदिति आशास्महे। इति

विज्ञापकः
*श्री गौरीकुमार ब्रह्मा*
सेक्रेटारी
ओड़िशा-साहित्य-एकाडेमी

# विषयानुक्रमणिका


| विषयः | | पृष्ठम् |
|---|---|---|
| **अथ प्रथमः पादः** | | |
| इष्टदेवतानमस्कारः | ... | १ |
| ग्रन्थकरणे कारणप्रदर्शन चूर्णकम् | ... | १ |
| संगीतनिरूपणम् | ... | २ |
| कुतः किमुत्पन्नम् | ... | २ |
| संगीतस्य परम्पराशुद्धिः | ... | २ |
| संगीतस्य प्राशस्त्यम् | ... | २ |
| संगीतस्य श्रीकृष्णप्रीतिकारणत्वम् | ... | २ |
| संगीतस्य चतुर्वर्गसाधनत्वम् | ... | २ |
| संगीतस्वरूपम् | ... | ३ |
| संगीतस्य भेदद्वयम् | ... | ३ |
| नाद-स्वरूपम् | ... | ३ |
| मतान्तरे नादोत्पत्तिप्रकारः | ... | ३ |
| नादस्य त्र्यैविध्यम् | ... | ३ |
| नादः कथं पञ्चभेदं प्राप्नोति | ... | ४ |
| पञ्चविध नादस्य कानि स्थानानि | ... | ४ |
| नादोत्पत्तिं प्रति पवनस्य प्रधानकारणत्वम् | | ४ |
| नाद माहात्म्यम् | ... | ४ |
| मन्द्रादिभेदत्रयम् | ... | ४ |

| विषयः | | पृष्ठम् |
|---|---|---|
| गीतनिरूपणम् | ... | ४ |
| केवलगीतस्य माहात्म्यम् | .. | ५ |
| श्रुति-निरूपणम् | ... | ६ |
| षड्जादिसप्तस्वरेषु श्रुतीनां संख्याकथनम् | ... | ६ |
| षड्जादिस्वरे काः श्रुतयः | ... | ६ |
| श्रुतिमाहात्म्यम् | ... | ६ |
| स्वरनिरूपणम् | ... | ७ |
| के स्वराः | ... | ७ |
| पक्षान्तरकथनम् | ... | ७ |
| सप्तस्वरेष्वेकैकं सप्ताक्षराणि | ... | ७ |
| सप्तस्वराणां मन्द्रादि त्रिविधकथनम् | ... | ७ |
| मन्द्रादीनां स्थानाल्पत्वकथनम् | ... | ७ |
| षड्जादि सप्तस्वराणां जन्मस्थानानि | ... | ८ |
| सप्तस्वराणामनुष्टुवादि सप्तछन्दांसि | ... | ८ |
| षड्जादिसप्तस्वरध्वनिकर्तृत्वेन मयूरादि सप्त कथनम् | | ८ |
| स्वराणां मध्ये के कस्मात्कुलादुत्पन्नाः | ... | ९ |
| षड्जादि सप्तस्वराणां रूपम् | ... | ९ |
| षड्जादि सप्तस्वराणां देवताः | ... | ९ |
| षड्जादि सप्तस्वराणामुच्च-नीच-स्वरित निर्णयः | | ९ |
| के स्वराः कस्माद्वेदादुत्पन्नाः | ... | ९ |
| षड्जादि सप्तस्वराणां ब्राह्मणादिचतुर्विधजाति कथनम् | | १० |
| केषु स्वरेषु के देवास्तुष्यन्ति | ... | १० |
| स्वराणां हास्यादिरसेषु प्रयोगाः | ... | १० |
| सप्तस्वराणां जम्बुप्रभृतिसप्तद्वीपजन्मकथनम् | | १० |
| सप्तस्वराणां कान्यकुब्जादिसप्तदेशकथनम् | | १० |
| सप्तस्वराणां भूरादिसप्तलोककथनम् | ... | १० |
| सप्तस्वराणां रव्यादिजन्मवारकथनम् | | ११ |
| सप्तस्वराणां वेदशाखाकथनम् | | ११ |
| सप्तस्वराणां वयः प्रमाणकथनम् | ... | ११ |
| सप्तस्वराणां प्रयोगकथनम् | ... | ११ |





| विषयः | | पृष्ठम् |
|---|---|---|
| सप्तस्वराणां वाद्यादिभेदचतुष्टयम् | ... | ११ |
| ग्रामाः | | ११ |
| घोर-मन्द्र-ताराणां स्थानानि | ... | १२ |
| ग्रामत्रयाणां नागलोकादिलोकत्रयस्थितिः | ... | १२ |
| घोरादिग्रामाणामेकरूपादिभेदः | ... | १२ |
| षड्जमध्यमगान्धारग्रामाणामुपयोगिता | ... | १२ |
| ग्रामस्य स्वरूपम् | ... | १२ |
| मूर्च्छनानिरूपणम् | ... | १२ |
| एकविंशति मूर्च्छनानां नामानि | ... | १२ |
| मूर्च्छनानां फलम् | ... | १३ |
| मूर्च्छनाप्रयोगस्वरूपम् | | १३ |
| मूर्च्छनानामसंख्यत्वम् | ... | १३ |
| तानाः | ... | १३ |
| तानानामूनपञ्चाशत्परिमितसंख्याहेतुकथनम् | | १३ |
| ऊनपञ्चाशत्परिमितहौम्यादिताननां नामानि | | १३ |
| तानानां नामरचना केन कृता | ... | १३ |
| स्वरभेदवर्णाः | ... | १४ |
| स्वराणां चतुर्विधभेदाः | ... | १४ |
| स्थाय्यादि स्वराणां भेदसंख्या | ... | १४ |
| ग्रहस्वरन्यासस्वरौ | ... | १४ |
| अंश स्वरः | ... | १४ |
| अंशस्य प्रधानताकथने माघकाव्येऽप्युदाहरणम् | | १४ |
| जातिः | ... | १४ |


## अथ द्वितीयः पादः


| | | |
|---|---|---|
| रागाः | ... | १५ |
| रागेषु पुंमासः कियन्तः स्त्रियश्च | ... | १५ |
| अङ्गबङ्गादि देशानां नामानि | ... | १५ |
| प्रचरतां द्विचत्वारिंशद्रागाणां पुं स्त्रीभेदेन नामानि | | १६ |
| एषां प्रत्येकं स्त्रीसंख्यां स्त्रीनामानि च | ... | १६ |

| विषयः | | पृष्ठम् |
|---|---|---|
| रागाणां पुं स्त्रीविवेचने नारदः फलमाह | .. | १६ |
| रागाणां निर्णयोऽशक्यः | ... | १७ |
| रागाणां षाडवौडवसंपूर्णभेदत्रयकथनम् | | १७ |
| षाड़वौडवसम्पूर्णरागाणां गायनफलम् | ... | १७ |
| रागाणां ध्यानम् | ... | १७ |
| रागाणां गायनकालनिर्णयः | ... | २१ |
| नाटादि रागणां गायन-निषिद्धकालः | ... | २१ |
| रागैर्विरतानां गीतानां वीरादिरसेषु गायनकालः | | २१ |
| रसानां मध्ये स्त्री-पुरुष-नपुंसक भेदाः | ... | २२ |
| रागाणामकालगायने दोषः | ... | २२ |
| रागाणामकालगायने दोषापवादः | ... | २२ |
| रागाणामकालगायने प्रायश्चित्तः | ... | २२ |
| सर्वकालगेयरागाः | ... | २२ |
| रागाणां गायने नारदः | ... | २२ |
| गीतभेदाः | ... | २२ |
| अनिबद्धगीतलक्षणम् | ... | २२ |
| आलप्तिलक्षणम् | ... | २३ |
| आलप्ति भेदद्वयम् | ... | २३ |
| गीतस्य शुद्धादिभेदत्रयम् | ... | २३ |
| शुद्ध गीतलक्षणम् | ... | २३ |
| छायालगगीतलक्षणम् | ... | २३ |
| शुद्धगीतस्यापि प्रबन्धः | ... | २३ |
| प्रबन्धांगमध्ये प्रथमतो धातुः | ... | २३ |
| प्रबन्धाङ्गानि | ... | २४ |
| प्रबन्धानां जातिः | ... | २४ |
| प्रबन्धगीतेषु तालरागपाटादीनां विधिः | ... | २४ |
| रागादीनां विहारत्वे वाक्यम् | ... | २५ |
| मातृका प्रबन्धः | ... | २५ |
| मातृका प्रबन्धस्य भेदत्रयम् | ... | २५ |
| दिव्या-मातृकाप्रबन्धलक्षणम् | ... | २५ |



| विषयः | | पृष्ठम् |
|---|---|---|
| मानुषीमातृकाप्रबन्धलक्षणम् | ... | २५ |
| मातृकाप्रबन्धस्य तालरागयोरनियमः | ... | २५ |
| मातृकाप्रबन्धस्य महिमा | ... | २५ |
| अन्यप्रबन्धविषयः | ... | २६ |
| सकायबाल-प्रबन्धः | ... | २६ |
| तालार्णव-प्रबन्धः | ... | २६ |
| सिंहलील-प्रबन्धः | ... | २६ |
| सूड़ प्रबन्धः | ... | २७ |
| सूड़प्रबन्धलक्षणम् | ... | २७ |

अथ तृतीयः पादः

| | | |
|---|---|---|
| छायालगसूड़लक्षणम् | ... | २८ |
| ध्रुवलक्षणतालः | | २८ |
| मष्टक लक्षणतालः | ... | २८ |
| गायने ध्रुवकस्य प्राधान्यम् | ... | २८ |
| ध्रुवस्य लक्षणम् | ... | २८ |
| उदाहरणं मल्हाररागेण | ... | २९ |
| खण्डद्वयगीतं ध्रुवः गेयम् | ... | २९ |
| मश्टलक्षणम् | ... | २९ |
| ध्रुवमश्टलक्षणयोर्भेदः | ... | ३० |
| अवान्तर खण्डः | ... | ३० |
| भङ्गीस्वरूपम् | ... | ३१ |
| तालानामावृत्तिः | ... | ३१ |
| सिंहनन्दनताले त्रिपुलद्ग्राहादिष्वेकयावृत्या उदाहरणगीतम् | | ३१ |
| एकतालादितालानां बन्ध समावेशः | ... | ३१ |
| तालाङ्ग परिभाषा | ... | ३१ |
| अनुद्रुतादि पञ्चतालङ्गानम् | ... | ३२ |
| अनुद्रुतादिपञ्चतालाङ्गानां प्रत्येकं नामपञ्चकम् | | ३२ |
| अनुद्रुतादिपञ्चानामुत्पत्तिस्थानम् | ... | ३२ |
| अनुद्रुतादीनां वर्णम् | ... | ३२ |
| अनुद्रुतादिपञ्चतालाङ्गानां देवताः | ... | ३२ |

| विषयः | | पृष्ठम् |
|---|---|---|
| द्रुतादीनां मध्ये के कति मात्राः | ... | ३३ |
| तालशब्दस्य व्युत्पत्तिः | ... | ३३ |
| मकारादि-परिभाषाक्षराष्टगणोत्पत्तिस्थानम् | | ३३ |
| मकाराद्यष्टगणवर्णम् | ... | ३३ |
| मकाराद्यष्टगणस्य शुभाशुभफलम् | ... | ३४ |
| मकाराद्यष्टगणप्रयोगः | ... | ३४ |
| मात्राप्रमाणम् | ... | ३४ |
| अन्यमते मात्राप्रमाणम् | ... | ३४ |
| गुरुलघ्वक्षरनिर्णयः | ... | ३४ |
| अनुद्रुतादीनामङ्गुलप्रमाणम् | ... | ३५ |
| अनुद्रुतादि पञ्चानां रेखान्यासः | ... | ३५ |
| द्रुतादीनां सशब्द निःशब्दघातप्रकारः | ... | ३५ |
| द्रुतादीनां चतुरङ्गुलादिघातनिर्वाहप्रकारः | | ३५ |
| द्रुतादीनां मध्ये कस्य कुत्र घातोदयः | ... | ३६ |
| सशब्द निःशब्दयोरनित्यता | ... | ३६ |
| द्रुतादीनामङ्गुल्या वादनप्रकारः | ... | ३६ |
| अनुद्रुतादीनामुत्पन्नप्रकारः | ... | ३६ |
| गीतवाद्य-नृत्यानां तालस्य मूलकारणम् | | ३६ |
| तालस्यापि प्रधानता | ... | ३६ |
| तालस्थितदेवाः | ... | ३७ |
| के तालाः | ... | ३७ |
| आदि तालस्य 'रास' इति नाम | ... | ३७ |
| हकारः | ... | ३७ |
| उदाहरणम् | ... | ३७ |
| स्वरकरणम् | ... | ३८ |
| यतिः | ... | ३८ |
| अथ च हकारः | ... | ३८ |
| शुद्धयत्यामुदाहरणम् | ... | ३८ |
| स्वरकरणम् | ... | ३८ |
| नाट रागसूडे गीतम् | ... | ३८ |







| विषयः | | पृष्ठम् |
|---|---|---|
| निःसारी तालः | ... | ३९ |
| अथ च हकारः | ... | ३९ |
| उदाहरणम् | ... | ३९ |
| स्वरकरणम् | | ३९ |
| अथ मण्ठकः | ... | ३९ |
| अथ च हकारः | ... | ३९ |
| अथ झम्पकः | ... | ३९ |
| अथ च हकारः | ... | ४० |
| स्वरकरणम् | ... | ४० |
| अथ रूपकः | ... | ४० |
| अथ च हकारः | ... | ४० |
| उदाहरणम् | ... | ४० |
| स्वरकरणम् | ... | ४० |
| अथ त्रिपुटः | ... | ४१ |
| अथ हकारः | ... | ४१ |
| स्वरकरणम् | ... | ४१ |
| अथाडुतालः | ... | ४१ |
| अथ च हकारः | ... | ४२ |
| उदाहरणम् | .. | ४१ |
| स्वरकरणम् | ... | ४१ |
| अथैकताली | ... | ४२ |
| हकारः | ... | ४२ |
| उदाहरणम् | ... | ४२ |
| स्वरकरणम् | ... | ४२ |
| अथ कुड्कतालः | ... | ४२ |
| हकारः | ... | ४२ |
| उदाहरणम् | ... | ४२ |
| स्वरकरणम् | ... | ४२ |
| कलाबहुलशशिप्रियादिचतुस्तालाः | ... | ४३ |
| उदाहरणगीतम् | ... | ४३ |

| विषयः | | पृष्ठम् |
|---|---|---|
| अथ नलकूवरः | ... | ४३ |
| उदाहरणम् | ... | ४३ |
| अथ वाद्यकाकुलः | ... | ४३ |
| उदाहरणगीतम् | ... | ४४ |
| अथ सिंहनन्दनः | ... | ४४ |
| उदाहरणगीतं भैरवेन | ... | ४५ |
| अथ चतुर्थः पादः | | |
| क्षुद्रगीतलक्षणम् | | ४५ |
| केवलक्षुद्रगीतम् | ... | ४५ |
| अन्त्यानुप्रासः | ... | ४५ |
| अथ चितपदागीतलक्षणम् | ... | ४५ |
| उदाहरणं गुण्डकेरिरागेण | ... | ४५ |
| अथ चित्रकला गीतलक्षणम् | ... | ४५ |
| चित्रकला भेदः | ... | ४६ |
| उदाहरणं श्रीगीतगोविन्दे गुज्जरीरागेण | ... | ४६ |
| ध्रवपदागीतलक्षणम् | ... | ४६ |
| माखीरागेण रुपकतालेनोदाहरणम् | ... | ४६ |
| पाञ्चाली गीतलक्षणम् | ... | ४६ |
| मतान्तरे पाञ्चाली गीतलक्षणम् | ... | ४६ |
| उदाहरणं तु संगीतसारे | ... | ४६ |
| गीतानां दिव्यमानुष्यादि भेदत्रयम् | ... | ४७ |
| मानुष गीतहेतु भाषा | ... | ४७ |
| गीत गुणाः | ... | ४७ |
| ग्रहविषयः | ... | ४७ |
| ग्रहाणां मध्ये प्रथमतोऽनागत ग्रहः | ... | ४७ |
| उदाहरणगीतम् | ... | ४७ |
| समग्रहः | ... | ४८ |
| अतीतग्रहः | ... | ४८ |
| ग्रहाणामाहात्म्यम् | ... | ४८ |
| लयलक्षणम् | ... | ४८ |



| विषयः | | पृष्ठम् |
|---|---|---|
| द्रुतादित्वलयत्रयाणां पात्र निर्णय : | ... | ४८ |
| द्रुतादिलयत्रयाणां मात्रान्यूनाधिकप्रमाणम् | | ४८ |
| यतिलक्षणम् | ... | ४९ |
| समायतिः | ... | ४९ |
| श्रोतोवहा यतिः | ... | ४९ |
| गोपुच्छिकायतिः | ... | ४९ |
| मानलक्षणम् | ... | ४९ |
| धातोः पुनरुक्ततां नवनवत्वं च | ... | ४९ |
| रागरम्यत्वलक्षणम् | ... | ४९ |
| गमकोत्पत्तिस्थानम् | ... | ४९ |
| गमक स्वरूपम् | ... | ५० |
| गमक प्रभेदः | ... | ५० |
| गमकाभ्यासप्रकारः | ... | ५० |
| नैर्मल्यम् | ... | ५० |
| गीताङ्गहीनदोषाः | ... | ५० |
| समान्यतः संस्कृत प्राकृतगीतदोषाः | ... | ५१ |
| भाषागीतविषयः | ... | ५१ |
| संस्कृत गीति-विषयः | ... | ५१ |
| गायक दोषाः | ... | ५१ |
| गायक भेदाः | ... | ५२ |
| गायकस्य पञ्चविधत्वम् | ... | ५२ |
| गायकस्य एकतालादि भेदत्रयम् | ... | ५२ |
| गायनी लक्षणम् | ... | ५२ |
| वाग्गेय लक्षणम् | ... | ५२ |
| वाग्गेयकारकः कतिविधः | ... | ५२ |
| एषां लक्षणम् | ... | ५२ |
| अथ पञ्चमः पादः | | |
| वाद्यमाहात्म्यम् | ... | ५३ |
| वाद्यफलम् | ... | ५३ |
| कति वाद्यभेदाः | ... | ५३ |

| विषयः | | पृष्ठम् |
|---|---|---|
| चतुर्विधवाद्यनाम | ... | ५३ |
| वाद्यभेदाः | ... | ५३ |
| तत वाद्यफलम् | ... | ५५ |
| तत वाद्यमध्ये वीणायां मोक्षसाधनत्वम् | ... | ५५ |
| शुषिर वाद्याः | ... | ५६ |
| शुषिरवाद्य मध्ये वंशः | ... | ५६ |
| मुरली | ... | ५६ |
| वंशी | ... | ५६ |
| फूत्कृतगुणाः | ... | ५७ |
| फूत्कृतदोषाः | ... | ५७ |
| वांशिक गुणाः | ... | ५७ |
| वांशिकदोषाः | ... | ५७ |
| आनद्धवाद्यम् | ... | ५७ |
| मर्द्लोपयोगित्वादत्रनवाङ्गः गृह्यते | ... | ५८ |
| मर्द्लोपयोगी काष्ठम् | ... | ५८ |
| मर्द्लस्य दीर्घादिप्रमाणम् | ... | ५८ |
| मर्द्लनिर्माण विधिः | ... | ५८ |
| मर्द्लमुखदेयखरलिलेपः | ... | ५८ |
| मर्द्ल वाममुखदेयपूरिका | ... | ५८ |
| मर्द्ल माहात्म्यम् | ... | ५९ |
| घनवाद्याः | ... | ५९ |
| घनवाद्यमध्ये तालनिर्माणम् | ... | ५९ |
| ततादिवाद्यचतुष्टयोत्पत्तिहेतुः | ... | ६० |
| ततादि चतुर्विधवाद्यानां के केषाम् | ... | ६० |
| नृत्यं | ... | ६० |
| नृत्यलक्षणम् | ... | ६० |
| नृत्यादौ गायनस्यावश्यककर्तव्यता | ... | ६० |
| नृत्यस्य महिमा | ... | ६१ |
| नृत्यस्य महिमा पुराणान्तरेऽपि | ... | ६१ |
| नृत्यस्य भेदद्वयम् | ... | ६१ |





| विषयः | | पृष्ठम् |
|---|---|---|
| ताण्डवस्यापि भेदद्वयम् | ... | ६१ |
| प्रेरणी लक्षणम् | ... | ६१ |
| बहुरूप लक्षणम् | ... | ६१ |
| लास्यम् | ... | ६१ |
| लास्यस्यापि भेदद्वयम् | ... | ६१ |
| स्फुरित लक्षणम् | ... | ६१ |
| यौवतलास्य लक्षणम् | ... | ६१ |
| नृत्यप्रवर्तनक्रमः | ... | ६२ |
| काष्ठी नृत्यम् | ... | ६२ |
| जाकड़ीनृत्यलक्षणम् | ... | ६२ |
| शावरी नृत्यलक्षणम् | ... | ६२ |
| कुरङ्गीनृत्यलक्षणम् | ... | ६२ |
| मत्तावली नृत्यम् | ... | ६२ |
| सभा निवेशन विधिः | ... | ६३ |
| सभासद् जनानां लक्षणम् | ... | ६३ |
| सभागमनायोग्यजन कथनम् | ... | ६३ |
| नृत्ये स्त्रिय एव प्रधानपात्रम् | | ६३ |
| नर्त्तकीस्त्रीणां लक्षणम् | ... | ६३ |
| नृत्यायोग्य स्त्रीलक्षणम् | ... | ६४ |
| जर्जरपूजाविधिः | ... | ६४ |
| जवनिका विधिः | ... | ६४ |
| जवनिका वस्त्रस्य शृङ्गारादिरसेषु वर्णभेदः | | ६४ |
| नर्तकस्य नर्तक्याश्च मण्डनविधिः | ... | ६५ |
| वेशान्तरम् | ... | ६५ |
| मसी | ... | ६५ |
| शुद्धमस्युपयोगी द्रव्याणि | ... | ६५ |
| हरितालस्य महिमा | ... | ६५ |
| हरिताले के देवास्तिष्ठन्ति | ... | ६६ |
| हरितालस्याभिमन्त्रणफलम् | ... | ६६ |
| वेशनिर्णयः | ... | ६६ |

| विषय | | पृष्ठम् |
|---|---|---|
| वेशान्तर्गतमाल्यस्य भेद चतुष्टयम् | ... | ६६ |
| चतुर्विधालंकाराः | ... | ६६ |
| विद्धादि अलंकाराणां लक्षणम् | ... | ६७ |
| नाट्यभाषा | ... | ६७ |
| नाट्यवृत्तिः | ... | ६७ |
| भारत्यादि नाट्यवृत्तीनां वेदोत्पत्तिकथनम् | | ६७ |
| भारत्यादीनां महिमा | ... | ६८ |
| नर्तकस्य रङ्गभूमिप्रवेशप्रकारः | ... | ६८ |
| सभाजनानां मध्ये केषां किमपेक्षितम् | | ६८ |
| नर्तकस्य नृत्यप्रकारः | ... | ६८ |
| नृत्ये वर्जनीयाः | ... | ६८ |
| नाट्यरञ्जकस्याभिनयनिऽर्णयः | | ६८ |
| साधुवादनम् | ... | ६७ |
| सभायाः प्रथमोथ्थाननिषेधः | ... | ६६ |
| हस्तक विषयः | ... | ६६ |
| षडङ्गानां मध्ये प्रथमतः शिरोभेदः | ... | ६६ |
| आकम्पितादि चतुर्दशशिरो भेदनां मध्ये परिवाहितः | | ६६ |
| हस्तस्य हस्तकभेदाः | ... | ६६ |
| पताका हस्तादिभेदद्वयम् | ... | ७० |
| त्रिपताकाहस्तम् | ... | ७० |
| नर्तकस्य हस्तक करणकालीन चेष्टितम् | ... | ७० |
| चारीस्वरूपम् | ... | ७० |
| अभिनया एव रसोत्पत्ति हेतवः | ... | ७१ |
| रसस्य आत्मस्वरूपता | ... | ७१ |
| नान्दीलक्षणम् | ... | ७१ |
| नान्दी प्रयोजनम् | ... | ७१ |
| अशुद्धगीतनृत्य निषेधः | ... | ७१ |
| संगीतस्य वृक्षरूपकत्वेन कल्पना | ... | ७१ |
| ग्रन्थकारपरिचयः समयनिर्देशश्च | ... | ७२ |




# नाट्यमनोरमा



## अथ प्रथमः पादः

*अथेष्टदेवता नमस्कारः*

राधामनः कैरव-तारकेशं नमामि देवं पशुपाल-वेशम्।
कलिन्दजा-तीर-विहारतोषं गोपीषु संवर्द्धित मन्दहासम्॥ १

मृगमदकृतचर्चा पीतकौषेयवासा
रुचिर शिखिशिखण्डाबद्धधम्मिल्लपाशा।
अनृजु निहितमंशे वंशमुत्क्काणयन्ती
धृतमुररिपुलीला मालिनी पातु राधा॥ २

*चूर्णकम्—*

यद्यपि विबुधवृन्दानन्ददात्री सकलसंगीतशास्त्राऽतिशय सारसुधाधात्री नाट्यागमदुर्ज्ञेयान्धकारनिःशेषहन्त्री गान्धर्व-लीलायित - सुकुमारमति - महीपचयचित्त - चकोर-चक्रान् खेलयन्ती स्वकीया संगीतार्णवचन्द्रिका शोभते॥ तथापि मेधाविहीन बोधशक्तिक्षीण रहितभाग्यविभव-स्वोदर-पूरणव्यवसायविशेषबहुकालपठनानर्हाणा - मिति त्रिविधजनानामल्पतरश्रमेणाऽपि संगीतज्ञानं भविष्यतीति मनसि सुचिन्त्य, श्रीनीलकण्ठनामधेयेन केरलोर्वीनरपतिना नाट्यमनोरमा समारभ्यते॥

# नाट्यमनोरमा



## अथ प्रथमः पादः

*अथेष्टदेवता नमस्कारः*

राधामनः कैरव-तारकेशं नमामि देवं पशुपाल-वेशम्।
कलिन्दजा-तीर-विहारतोषं गोपीषु संवर्द्धित मन्दहासम्॥ १

मृगमदकृतचर्चा पीतकौषेयवासा
रुचिर शिखिशिखण्डावद्धधम्मिल्लपाशा।
अनृजु निहितमंशे वंशमुत्काणयन्ती
धृतमुररिपुलीला मालिनी पातु राधा॥ २

*चूर्णकम्—*

यद्यपि विबुधवृन्दानन्ददात्री सकलसंगीतशास्त्राऽतिशय सारसुधाधात्री नाट्यागमदुर्ज्ञेयान्धकारनिःशेषहन्त्री गान्धर्व-लीलायित - सुकुमारमति - महीपचयचित्त - चकोर-चक्रान् खेलयन्ती स्वकीया संगीतार्णवचन्द्रिका शोभते॥ तथापि मेधाविहीन वोधशक्तिक्षीण रहितभाग्यविभव-स्वोदर-पूरणव्यवसायविशेषवहुकालपठनानर्हाणा - मिति त्रिविधजनानामल्पतरश्रमेणाऽपि संगीतज्ञानं भविष्यतीति मनसि सुचिन्त्य, श्रीनीलकण्ठनामधेयेन केरलोर्वीनरपतिना नाट्यमनोरमा समारभ्यते॥

*अथ संगीतनिरूपणम्—*

पुरा चतुर्णां वेदानां सारमाकृष्य पद्मभूः ।
इदं तु पञ्चमं वेदं संगीतं समकल्पयत् ॥ ३

*कुतः किमुत्पन्नं तदाह—*

ऋग्भ्यः पाठ्यमभूद्गीतं सामभ्यः समपद्यत ।
यजुर्भ्योऽभिनया जाता रसाश्चाथर्वणः स्मृताः ॥ ४

*अथ संगीतस्य परम्पराशुद्धिमाह—*

ब्रह्मात्रिलोचन - समीरण - कश्यपश्च
मातङ्ग-काश्वतर - कोहल-नारदाश्च ।
नन्द्याञ्जनेय सुरपा भरतोऽम्बिकाद्या
एते हि नाट्यरचनां विदधुः पुरा वै ॥ ५

*अथ संगीतस्य प्राशस्त्यमाह—*

श्रुतिस्मृत्यादिसाहित्य नानाशास्त्रविदोऽपि च ।
संगीतं ये न जानन्ति ते द्विपादो मृगाः स्मृताः ॥ ६
अज्ञात्वा नाट्यशास्त्रं तु वृथा वेदादिषु श्रमम् ।
प्र[illegible]र्वन्ति नरा ये वै विज्ञेयास्ते नराधमाः ॥ ७
संगीतकेन रम्येण चित्तं यस्य न हृष्यति ।
मनुष्यवृषभो लोके विधिनैव स वंचितः ॥ ८

*अथ संगीतस्य श्रीकृष्णप्रीतिकारणत्वमाह—*

भक्तो विचित्रै र्ललितैः कारितैर्वा स्वयं कृतैः ।
गीतै र्वाद्यैश्च नृत्यैश्च श्रीकृष्णं परितोषयेत् ॥ ९
गीतं वाद्यं च नृत्यं च नाट्यं विष्णुकथां मुने ? ।
यः करोति स पुण्यात्मा त्रैलोक्योपरिसंस्थितः ॥ १०

*अथ संगीतस्य चतुर्वर्ग साधनत्वमाह—*

इदं नृणां चेत्संगीतं सम्यगाकलितं तदा ।
चतुर्वर्गफलप्राप्तेः कारणं मुनयोऽवदन् ॥ ११

त्रिवर्गफलदाः सर्वे दान - यज्ञ - स्तवादयः ।
एकं संगीतविज्ञानं चतुर्वर्गफलप्रदम् ॥ १२
कृष्णेशादि स्तवाद्धर्मो नृपादेरर्थकामकौ ।
अकामतो निर्वहणान्मोक्षस्तस्मात्तदभ्यसेत् ॥ १३

*अथ संगीतरूपं किमेतत्तदाह—*

गीतं वाद्यं च नृत्यं च त्रयं संगीतमुच्यते ।
गीतवाद्ये उभे एव संगीतमिति केचन ॥ १४

*अथ संगीतस्य भेदद्वयमाह—*

मार्ग-देशी विभेदेन संगीतं भवति द्विधा ।
मार्गाश्रितं तु संगीतं स्वर्गे भूरि प्रयोगभाक् ॥
जगज्जन - मनोहारी देशी संगीतमुच्यते ॥ १५

*तत्र गीतस्य प्रथमोद्दिष्टत्वेन तत्कारणतया प्रथमतो नादः कथ्यते । अथ नादमाह—*

नाभेरुर्द्ध्वं हृदिस्थानान्मारुतः प्राणसञ्ज्ञकः ।
नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्त्तितः ॥ १६

*अन्य मते तु ( तमपि ) नादोत्पत्तिप्रकारमाह—*

आकाशाग्निमरुज्जातो नाभेरूर्द्ध्वं समुच्चरन् ।
मुखेऽभिव्यक्ति मायाति यः स नादः प्रकीर्त्तितः ॥ १७
पवनानलनामानौ नादौ तु परिकीर्त्तितौ ।
जातस्तयोर्यतो योगात्तेन नाद इति स्मृतः ॥ १८

*अथ नादस्य त्रिविधभेदमाह—*

स च प्राणिभवोऽप्राणिभवश्चोभयसम्भवः ।
आद्यः कायभवो वीणादिभवश्च द्वितीयकः ॥
तृतीयोऽपि च वंशादिभव इत्थं त्रिधा मतः ॥ १९

*अथ नादः कथं पञ्चविधभेदं प्राप्नोति तदाह—*

स संचरन्नूर्ध्वपथे धत्ते पञ्चविधान् क्रमात् ।
अतिसूक्ष्मश्च, सूक्ष्मश्च, व्यक्तोऽव्यक्तश्च कृत्रिमः ॥ २०

*अथ पञ्चविधनादस्य कानि पञ्चस्थानानि तान्याह—*

अति सूक्ष्मो भवेन्नाभौ हृदि सूक्ष्मः प्रकाशते ।
व्यक्तोऽतिव्यत्यते कण्ठेऽत्यव्यक्तः शिरसि स्मृतः ॥
कृत्रिमो मुखदेशेस्यादिति पञ्चविधो मतः ॥ २१

*अथ नादोत्पत्तिं प्रति पवनस्य प्रधानकारणतामाह—*

कुम्भकारो यथा चक्रे घटते घटना(मा)दिकम् ।
तथा समीरणो गर्भे जायते प्राणिनामपि ॥ २२

*अथ नादमहात्म्यमाह—*

न नादेन विना गीतं न नादेन विना स्वरः ।
न नादेन विना राग स्तस्मान्नादात्मकं जगत् ॥ २३
नादोपासनया देवा ब्रह्मविष्णुमहेश्वराः ।
भवत्युपासिताः नूनं तस्मादेते तदात्मिकाः ॥ २४
नादरूपं परं ब्रह्म नादरूपो महेश्वरः ।
नादरूपा पराशक्ति र्नादरूपो जनार्दनः ॥ २५

*अथ मन्द्रादि भेदत्रयकथनम्—*

व्यवहारे त्वसौ नादः प्रोच्यते त्रिविधो बुधैः ।
मन्द्रो हृदि स्थितः कण्ठे मध्यस्तारश्च मूर्द्धनि ॥ २६
एवं बहुभिराचार्य्यैर्नादस्तु बहुधोदितः ।
प्रकृतानुपयोगित्वा न्न मया स प्रपञ्चितः ॥ २७

*अथ गीतं निरूप्यते—*

तल्लक्षणं त्वाचार्य्यमतभेदान्नानाविधम् ।
मया तत्रापि बहु सम्मत मुच्यते ।
धातु मातु समायुक्तं गीतमित्यभिधीयते ।
तत्र नादात्मकोमातुर्द्धातुरक्षरसंचयः ॥ २८

गीतं रञ्जकधातुमातुसहितम् ।
रञ्जकः स्वरसन्दर्भो गीतम् । अयमप्येकः पक्षः ॥

*अथ केवलगीतस्य महात्म्यमाह—विष्णुपुराणे*

काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः ॥ २९
आनन्दं तनुते गीतं पशोरपि शिशोरपि ।
विहङ्गानां भुजङ्गानां कुरङ्गाणां विशेषतः ॥ ३०
संसार - दुःख - तप्तानामुत्तमानामनुग्रहात् ।
प्रभुणा शङ्करेणात्र गीतविद्या प्रकाशिता ॥ ३१
गीतेन हारिणा वन्धं प्राप्नुवन्त्यपि पक्षिणः ।
विलादायान्ति फणिनः शिशवो न रुदन्ति च ॥३२
गीतं, पीनपयोधरा समदना नारी, विचित्रा कथा ।
रम्यं हर्म्यतलं, सुधांशुकिरणप्रोद्दीपिता यामिनी ॥
चित्तज्ञाः सुहृदः, सुताः सुमनसो, भक्ताः पुनः सेवकाः ।
शुद्धं गीतफलं कवित्वममलं संसारसाराः मता ॥ ३३
कृति चमत्कृतये किमतः परं फणिवरोऽश्वतरो श्रृत पञ्चमः ।
अपि मृतां यदवाप मदालसां मधुर-गीत वशीकृत-शङ्करः ॥ ३४
परमानन्दविवर्द्धनमभिमतफलदं वशीकरणम् ।
सकलजनचित्तहरणं, विमुक्तिवीजं परं गीतम् ॥ ३५
कृष्णं सन्तोषयेद्यस्तु सुगीतैर्मधुरस्वनैः ।
सामवेदफलं तस्य जायते नात्र संशयः ॥ ३६
नाहं तिष्ठामि वैकुण्ठे, न योगिहृदये, रवौ ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥ ३७
तेषां पूजादिकं गन्धधूपाद्यैः क्रियते नरैः ।
तेन प्रीतिं परां यामि न तथा मत्प्रपूजनात् ॥ ३८

*अथ श्रुति निरूपणम्—*

स नादः श्रुतयो द्वाविंशतिः स्यान्मारुता हतः।
द्वाविंशतिस्तिर्य्यगूर्ध्वा नाड्यो हृदयमाश्रिताः ॥३६

ता यावत्यस्तु तावत्यः श्रुतयः परिकीर्त्तिताः।
क्रमादुच्चोच्चता युक्ता वीणादावेव - लक्षिताः ॥ ४०

श्रवणादेव वोद्धव्याः श्रुतयो श्रुतिगोचराः।
कफादिदूषिते कण्ठे तासां व्यक्तिर्नजायते ॥ ४१

*अथ द्वाविंशतिश्रुतीनां नाम, षड्जादिसप्तस्वरेषु नान्द्यादि श्रुतिसंमिलन संख्या कथनम्—*

चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः।
ऋषभे धैवते तिस्रो द्वे गान्धारे निषादके ॥ ४२

*अथ कस्मिन् षड्जादिस्वरे काः श्रुतयस्तदाह—*

नान्दी विशालाः सुमुखी विचित्राः षड्जजाः स्मृताः।
चित्रा घना चालनिका ऋषभे तिस्र ईरिताः।
गान्धारे सरघामाला मध्यमे मागधी शिवा।
मातङ्गिका च मैत्री च चतस्रः परिकल्पिताः।
बाला कला कलरवा शार्ङ्गिरव्यपि पञ्चमः।
माता रसा-मृता चेति तिस्रो धैवतनामनि।
निषाद नामनि द्वे च विजया मधुकर्यपि।
इति स्वराणां श्रुतयो द्वाविंशतिरुदीरताः ॥ ४६

*अथ श्रुति महात्म्यम्—*

श्रुतिस्थाने स्वरान् वक्तुं नाऽलं ब्रह्माऽपि तत्त्वतः।
जलेषु चरतां मार्गो मीनानां नोपलक्ष्यते ॥ ४७

यथा क्षीरगतं सर्पिर्यथा काष्ठगतोऽनलः।
ज्ञायतेऽतोपदेशेन तथा स्वरगतः श्रुतिः ॥ ४८

तुल्यश्रुतिस्वराणां वै भेदो एतेषु ये स्थिताः ।
अप्रयोज्यतया नोक्ताः श्रुतीनां जातिभेदतः ॥ ४६

*अथ स्वर निरूपणमाह—*

स्वयं यो राजते नादः स स्वरः परिकीर्त्तितः ।
सोऽपि सप्तस्वरस्तज्ज्ञैः प्रोक्तः षड्जादिभेदतः ॥५०

अपरः पक्षो्ऽस्ति—

स स्वरो यः श्रुतिस्थाने स्वरन् हृदयरञ्जकः ।

अयमपि पुनरेकः पक्षः—

किंवा श्रोतृमनो यस्माद्रञ्जयन्ति ततः स्वराः ॥ ५१

*अथ के ते स्वरा इत्याह—*

षड्ज श्च ऋषभ श्चैव गान्धारो मध्यमस्तथा ।
पञ्चमो धैवतश्चैव निषादश्चेति ते क्रमात् ॥ ५२

*पक्षान्तरमाह—*

निषादर्षभगान्धार षड्ज - मध्यम - धैवताः ।
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ ५३

*अथ सप्तस्वरेष्वेकैकं सप्ताक्षराण्याह—*

'सा'क्षरे षड्जको जातो 'री' वर्णे ऋषभः स्मृतः ।
'गा'क्षरे चैव गान्धारो 'मा'क्षरे मध्यमः स्मृतः ॥ ५४
'पा'क्षरे पञ्चम श्चैव 'धा'क्षरे चैव धैवतः ।
'नि' वर्णे च निषादस्तु जातः सप्तस्वरो ध्रुवम् ॥ ५५

*अथ षड्जादि सप्तस्वराणां मन्द्रादि-त्रिविध-कथनम्—*

ते सन्ति त्रिविधा मन्द्र, तार, मध्यसमाश्रिताः ॥

*अथ मन्द्रादीनां स्थानाल्पत्वकथनम्—*

त्रिणि स्थानानि तेषां हि हृदि मन्द्रोऽभिधीयते ।
कण्ठे मध्यो मूर्द्ध्नि तारो द्विगुणस्तूत्तरोत्तरः ॥ ५६

प्रयोगाभावतश्चान्ये विशेषण - महीतले ।
विकृताद्द्वादशा ह्येते नोक्ता विस्तरशङ्कया ॥ ५७

*अथ षड्जादि सप्तस्वराणां जन्मस्थानान्याह—*

कण्ठादुत्तिष्ठते व्यक्तं षड्जसञ्ज्ञस्तु जायते ।
कण्ठोरस्तालुना साभ्यो जिह्वया दशनादपि ॥ ५८
नाभिमूलाद्यदा वर्ण उत्थितः कुरुते ध्वनिम् ।
ऋषभस्यैव निर्याति हेलया ऋषभः स्मृतः ॥ ५९
वायुः समुद्गतो नाभेः कण्ठशीर्ष समाहतः ।
नाना गन्धवहः पुण्यो गान्धारस्तेन हेतुना ॥ ६०
तद्वदेवोत्थितो वायुरुरः कण्ठसमाहतः ।
नाभि प्राप्तो महानादो मध्यस्थ स्तेन मध्यमः ॥ ६१
वायुः समुद्गतो नाभे रुरोहृत्कण्ठमूर्द्ध सु ।
वितरन् पञ्चमस्थान प्राप्त्या पञ्चम उच्यते ॥ ६२
अभिसन्धीयते यस्मात्स्वरस्तेनैव धैवतः ।
स तु तारप्रधानत्वाल्ललाटे व्यपतिष्ठते ॥ ६३
निषीदन्ति स्वराः यस्मान्निषाद स्तेन कथ्यते ।
अशेषसन्धिविषयं स तु व्याप्याऽवतिष्ठते ॥ ६४

*अथ षड्जादि सप्तस्वराणां अनुष्टुवादि सप्तछन्दांस्याह—*

क्रमादनुष्टुब् गायत्री त्रिष्टुप वृहती ततः ।
पंक्तिरुष्णिक् च जगतीत्याहुश्चन्दांसि सादिषु ॥ ६५

*अथ षड्जादि सप्तस्वरध्वनिकर्त्तृत्वेन मयूरादि सप्त कथनम्*

षड्जं वदति मायूरो निषादं च वदेद् गजः ।
अजा वदति गान्धारं क्रौञ्चो वदति मध्यमम् ॥ ६६
कुसुमागमकाले च कोकिलः पञ्चमं वदेत् ।
प्रावृट् काले तु संप्राप्ते भेको वदति धैवतम् ॥ ६७

ऋषभोऽपि वदेद्देव ऋषभं स्वरमेव तु।

*अथ स्वराणां मध्ये के कस्मात्कुलादुत्पन्नास्तदाह—*

देवजाति कुलोत्पन्नाः षड्जगान्धारमध्यमाः।
ऋषभोऽपि तदुत्पन्नः पञ्चमोऽपि तथा स्मृतः॥ ६८
पितृवंशसमुत्पन्नौ द्वयं पञ्चम - धैवतौ।
असुराणां कुलोत्पन्नो निषादश्चेति निर्णयः॥ ६९

*अथ षड्जादि सप्तस्वराणां रूपमाह—*

आम्भोजवर्ण्णः षड्जः स्यादृषभः पिञ्चराकृतिः।
सुवर्ण्णवर्ण्णो गान्धारो मध्यमः कुन्दसुन्दरः॥ ७०
श्यामलः पञ्चमो ज्ञेयो धैवतः पीतवर्ण्णकः।
निषादः कर्वुरश्चैव स्वरवर्ण्णाः प्रकीर्त्तिताः॥ ७१

*अथ षड्जादि सप्तस्वराणां देवतामाह—*

षड्जश्च ब्रह्मदेवःस्या निषादो राहुदैवतः।
गान्धारश्चन्द्रदेवः स्यान्मध्यमो रुद्रदैवतः॥ ७२
पञ्चमो विष्णुदेवः स्याद्धूमकेतुश्च धैवतः।
ऋषभश्चाग्निदेवः स्यात्स्वराणां देवताः स्मृताः॥ ७३

*अथ षड्जादिसप्तस्वराणामुच्च, नीच, स्वरित, निर्णयमाह—*

उच्चै निषादगान्धारौ नीचै ऋषभधैवतौ।
शेषास्तु स्वरिता ज्ञेया षड्ज-मध्यम-पञ्चमाः॥ ७४

*अथ षड्जादिसप्तस्वराणां मध्ये के कस्माद्वेदादुप्तन्नास्तदाह—*

षड्जर्षभौ समुत्पन्नौ ऋग्वेदाद्याविमौ स्मृतौ।
मध्यमो धैवतश्चैव यजुर्वेदात्मिकावुभौ॥
गान्धारपञ्चमोतद्वत् सामवेदादजायताम्।
निषादोऽथर्वणो ज्ञेयो स्वराणां वेदजन्यता॥ ७६

*अथ षड्जादि सप्तस्वराणां ब्राह्मणादि चतुर्विधजातिकथनम्*

द्विजातित्वे भवन्त्येते षड्जमध्यमपञ्चमाः।
ऋषभो धैवतश्चापि विज्ञेयौ क्षत्रियाविमौ ॥
गान्धारस्तु भवेद्वैश्यो निषादः शूद्र एव च ॥ ७७

*अथ षड्जादि सप्तस्वराणां मध्ये केषु स्वरेषु के देवास्तुष्यन्ति तदाह—*

कुमारः शंकरो ब्रह्मा विष्णुश्चापि धनेश्वरः।
आदित्यः सुरनाथश्च क्रमशो यान्ति तुष्टताम् ॥ ७८

*अथ षड्जादिसप्तस्वराणां हास्यादिरसेषु प्रयोगकथनम्—*

हास्ये शृङ्गारके कार्यौ स्वरौ मध्यमपञ्चमौ।
षड्जर्षभौ तथा चोक्तौ वीरे रौद्रे च तावुभौ ॥ ७९
गान्धारश्च निषादश्च कर्त्तव्यः करुणे रसे।
धैवतश्चापि कर्त्तव्यो वीभत्से च भयानके ॥ ८०

*अथ षड्जादि सप्तस्वराणां जम्बुप्रभृति सप्तद्वीपजन्मकथनम्*

जम्बुशाककुशक्रौञ्चशालमली - श्वेतपुष्कराः ।
द्वीपाज्जन्मभुवःसप्त षड्जादीनामनुक्रमात् ॥ ८०

*अथ षड्जादि सप्तस्वराणां कान्यकुब्जादि-सप्तदेश कथनम्—*

श्री कान्यकुब्ज–काश्मीर-देशौ पञ्चममध्यमौ।
महाराष्ट्रोड्रदेशीयौ गतावृषभधैवतौ ॥ ८२
गान्धारश्च निषादश्च गौड़नेपालदेशजौ।
षड्ज उत्तर देशीयः स्वरदेशा अमी मताः ॥ ८३

*अथ षड्जादि सप्तस्वराणां भूरादिसप्तलोककथनम्—*

भू र्भुवः स्वः महः सज्ञं जनः सत्यं तपोऽपि च।
लोकेषु षड्जप्रमुखाः निवसन्ति स्वराः क्रमात् ॥ ८४

*अथ षड्जादिसप्तस्वराणां रव्यादिसप्तजन्मवारकथनम्—*

रविश्चन्द्रःकुजः सौम्यो जीवः शुक्रः शनैश्चरः ।
षड्जादीनां क्रमादेते जन्मवाराः प्रकीर्त्तिताः ॥ ८५

*अथ षड्जादिसप्तस्वराणां वेदशाखाकथनम्—*

ऋचुर्गीतविदः शाखामार्चीमृषभ - षड्जयोः ।
गान्धारमध्यमौ चेतौ सन्तो माद्ध्यन्दिनीं विदुः ॥ ८६
पञ्चमो धैवतश्चेतौ स्वरौ कौथुम - शाखिनौ ।
काण्वशाखा निषादश्च स्वरशाखाः क्रमादिमाः ॥ ८७

*अथ षड्जादि सप्तस्वराणां वयःप्रमाणकथनम्—*

षड्जो द्वादशवर्षः स्यादृषभः षोड़शाब्दिकः ।
अब्दस्य पञ्चविंशत्या युक्तो गान्धार इष्यते ॥ ८८
त्रिंशद्वर्षो मध्यमाख्यः पञ्चमाख्यः स्वरः पुनः ।
पञ्चत्रिंशद्वत्सरः स्याच्चत्वारिंशत्समस्त्वधः ॥ ८९
षष्ठीवर्षो निषादाख्यः स्वराणां कथिताः समाः ।

*अथ षड्जादिसप्तस्वराणां प्रयोगकथनम्—*

सुरकर्मणि षड्जः स्यादृषभो ध्यानकर्मणि ।
गान्धार ऋषिसत्कारेऽसुरकर्मणि मध्यमः ॥ ९०
उत्सवे पञ्चमो ज्ञेयः क्षात्रकर्मणि धैवतः ।
विनोदकर्मणि बुधै निषादः कथितः स्वरः ॥ ९१

*अथ षड्जादिसप्तस्वराणां वाद्यादि भेदचतुष्टयमाह—*

ते वादि संवादि विवादिनश्च तथाऽनुवादी स्वरकाश्चतुर्धा ।
भूपोऽथमन्त्री रिपुरत्र संगी क्रमात्तथैवं गदिताः स्वराःस्युः ॥ ९२

वादि नृपस्तथामात्यः सम्बाद्यथ विवाद्यरिः ।
अनुवादीत्यनुचरो राज्ञः पात्रस्य चेरितः ॥ ९३

*अथ ग्रामानाह—*

ग्रामां स्त्रींश्च प्रवक्ष्यामि घोरमन्द्रकतारकान् ।
षड्ज-मध्यम-गान्धारं नाम ग्राम तृतीयकम् ॥ ९४

*अथ घोर-मन्द्र-ताराणां स्थानत्रयमाह—*

नाभिमध्ये स्थितो घोरो मन्द्रको हृदयस्थितः ।
शिरोगत स्तथातार स्त्रयो ग्रामाः प्रकीर्त्तिताः ॥ ९५

*अथ घोरादिग्रामत्रयाणां नागलोकादिलोकत्रयस्थितिमाह—*

घोरस्तु नागलोकानां मन्द्रको मर्त्त्यलोकतः ।
तारस्तु देवलोकानां त्रैलोक्यं व्याप्य संस्थितः ॥ ९६

*अथ घोरादिग्रामाणां एकरूपादिभेदमाह—*

एकरूपो भवेत्तारो द्विरूपो मन्द्रकस्तथा ।
वहुरूपं च घोरं च ग्रामरूपाः प्रकीर्त्तिताः ॥ ९७

*अथ षड्जमध्यम गान्धार ग्रामाणामुपयोगितामाह—*

षड्जमध्यमयो र्मर्त्त्यौ ग्रामयो रुपयोगिता ।
परिवारेण सहितः गान्धारः दिवि गीयते ॥ ९८

*अथ ग्रामस्य रूपमाह—*

... ... ... ... ... ...

अन्यः पक्षोऽस्ति

जातिभिः श्रुतिभिश्चैव स्वराः ग्रामत्वमागताः । ९९

*अथ मूर्च्छना निरूपणमाह—*

यत्र स्वरो मूर्च्छित एव रागः प्राप्तश्च तामाह मुनिस्तु मूर्च्छनां ।
ग्रामोद्भवास्ताः स्वरसप्तसंयुताः स्थानत्रये स्युः पुनरेकविंशतिः ॥ १००

*अथ एकविंशति मूर्च्छनानां नामान्याह—*

ललिता, मध्यमा, चित्रा, रोहिणी च मतङ्गजा ।
सौवीरा, वर्णमध्या च षड्जमध्या च पञ्चमा ॥ १०१
मत्सरी, मृदुमध्या च शुद्धान्ता च कलावती ।
तीव्रा, रौद्री तथा ब्राह्मी, वैष्णवी, खेचरी, वरा ॥ १०२
नादावती, विशाला च त्रिषु ग्रामेषु वै क्रमात् ।
एकविंशतिरित्युक्ताः मूर्च्छनाश्चन्द्रमौलिना ॥ १०३

*अथ मूर्च्छनानां फलमाह—*

शिवाग्रे मूर्च्छनां कृत्वा ब्रह्महाऽपि विमुच्यते।

*अथ मूर्च्छनाप्रयोगस्वरूपमाह—*

मूर्च्छनां कलयतो मुरशत्रोर्वंशिकाध्वनि-विशेष-वितानैः।
मूर्च्छनां ययुरनङ्गशरौघैरङ्गना रतिपतेरिव सेवाम्॥ १०४

*अथ मूर्च्छनानामसंख्यत्वमाह—*

मूर्च्छना एव तानाः स्युः शुद्धाया रोहणाश्रिताः।
तेषां भूरितराः भेदाः कस्तान् कार्त्स्न्येन वक्ष्यति॥ १०५

*अथ तानाः कथ्यते—*

विस्तीर्य्यन्ते प्रयोगा यैं मूर्च्छनाशेषसंश्रयाः ।
तानास्तेऽप्यूनपञ्चाशत्सप्तस्वरसमुद्भवाः ॥ १०६

*अथ तानानामूनपञ्चाशत्परिमितसंख्याहेतु कथनम्—*

ऊनपञ्चाशदनिलैं विंष्णु - रोचिष्णु - मानसैः।
यत्र तानाः प्रतन्यन्त ऊनपञ्चाशदप्यतः॥ १०७

*अथोनपञ्चाशत्परिमितहौम्यादि तानानां नामान्याह—*

हौम्योहार्म्य तदाहितौ च गमकः सञ्चारिता धारितौ।
छाया छन्दवली क्षराश्च वहनी रागाङ्ग हार्दौ जयी॥
मात्राश्चैव निरक्षरश्च ललिता चातक्रियाङ्गो गजः।
प्रौदीधारणकौ प्रबन्धदिविकौ द्रावी च लिप्तिस्ततः॥ १०८
ज्योतिर्बन्धरकौ ततः सुललिता रङ्गोऽर्द्ध मात्रारणो।
नष्टोदिष्टक रक्ति ताकि विनता खञ्जो वटी खट्टयः॥
कर्ण्णत्राण गतार्द्ध तारधरणो मध्याग्रतारः कडः।
स्तचेत् सर्वरसा च कर्णजनितः सर्वाग्रमात्रापरौ॥ १०९

*अथ तानानां नामरचना केन कृता तदाह—*

ऊनपञ्चाशदित्थं तु तानानां नाम कल्पनम्।
रचितं भरतेनापि मुनिना सर्वरञ्जकम्॥ ११०

*अथ स्वरभेद वर्णमाह—*

स्वरो गानक्रियारम्भः प्रयुक्तो वर्ण्ण उच्यते ।

*अथ स्वराणां चतुर्विधभेदानाह—*

स्थाय्यारोह्यवरोही च संचारीति चतुर्विधः ॥ १११

*अथ स्थाय्यादि स्वराणां भेदसंख्यामाह—*

षड्विंशतिः स्थायिनः स्युः रोहिणो द्वादशैव तु ।
संचारिणो द्वादशैव द्वादशैवावरोहिणः ॥ ११२

*अथ ग्रहस्वरन्यासस्वरावाह—*

ग्रहस्वरः स इत्युक्तो यो गीतादौ समर्पितः ।
न्यासस्वरः स इत्युक्तो यो गीतादि समाप्तिकृत् ॥ ११३

*अथ अंश स्वरमाह—*

यो रक्त्यभ्व्यञ्जको गेये यस्य सर्वेऽनुगामिनः ।
यः स्वयं ग्रहतां जातो न्यासादीनां प्रयोगतः ॥
यस्य सर्वत्र वाहुल्यं स वाद्यंशो नृपोपमः ॥ ११४

*अथ अंशस्य प्रधानताकथने माघकाव्येप्युदाहरणमाह—*

अनल्पत्वात् प्रधानत्वादंशस्येवेतरे स्वराः ।
विजिगीषो नृपतयः प्रयान्ति परिवारताम् ॥ ११५

*अथ जातिमाह—*

यस्या रागजनिस्तु जातिरिह सा रागस्य माताऽपि सा ।
शुद्धाख्या विकृतादयोश्च मिलनात्संमिश्रकाश्च त्रिधा ॥ ११६

एतासां जातीनां बहुतरो भेदाः सन्ति, ग्रन्थविस्तरभयान्नोक्ताः ॥

चक्रे नृपो यां भुवि केरलायां श्रीनीलकण्ठोऽपि च नाट्यपूर्वाम् ।
मनोरमाख्यां प्रथमोहि जातः पादस्तु तस्यां बुधशर्मदात्र्याम् ॥

---

# द्वितीयः पादः

*अथ रागानाह—*

यैस्तु चेतांसि रज्यन्ते जगत्रितयवर्तिनाम् ।
ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभिः ॥ १
गोपीभि र्गीतमारब्धमेकैकं कृष्णसन्निधौ ।
तेन जातानि रागाणां सहस्राणि तु षोड़श ॥ २

*अथ तेषु पुमांसः कियन्तः स्त्रियश्च कियत्यस्तदाह—*

रागेषु तेषु षट्त्रिंशद्रागिणी च पुमांश्च षट् ।
कालक्रमेण तत्राऽपि ह्रास एव तु दृश्यते ॥ ३
मेरोरुत्तरतः पूर्वे पश्चिमे दक्षिणे तथा ।
केचिद्वदन्ति ते सर्वे रागाः सन्तीति निश्चितम् ॥ ४

*अन्ये केचिन्मुनयस्तु पुनरेवं वदन्ति—*

समुद्रकुक्षौ ये देशा स्तत्रामीषां प्रचारणाः ॥

*चूर्णकम्—*

समुद्रकुक्षौ ये देशा इति कथं सम्भाव्यते । एतेन विरोधेन सति तद्विरोधनिराकर्त्तुं—"गङ्गायांघोषः" प्रतिवसति । "वटे गावः सुशेरते" इत्यादि सामीप्यसप्तमी विधाय कानि वचनानि दर्शयति । यथा वट समीपे गावः सुशेरते । तथा समुद्रकुक्षि समीपे ये देशास्तिष्ठन्तीति भावः । अतो यदुक्तं "समुद्र कुक्षौ ये देशा" इति तद्युक्तमेव ।

*अथ अङ्ग, वङ्ग, कलिङ्गादि देशानां नामान्याह—*

अङ्ग, बङ्ग, कलिङ्ग, तैलङ्ग, तेलङ्ग, तुलिङ्ग, भावङ्ग, युवङ्ग, युपलङ्ग, लेखाङ्ग, सौवीर, कीर, काश्मीर, नाभीर, नाहीर, सिन्धु, जालन्धिर, मग, मगध, निषेध, मलय, हीहय, गजाह्वय, मालव, जालव, मरि, गुरु,

उत्कल, कुन्तल, सिंहल, हरकेल, केरल, मल्लवार, मल्ल, भल्ल, सौविद, मल्लरात, किंजत, गुज्जरात, गुर्ज्जर, गौड़, द्राविड़, ओड्र, अन्तर्वेदी, चेदी, काञ्ची, कुञ्चिका, पाञ्चाल, सुराष्ट्र, महाराष्ट्र, शबर, लोहाबर, खशरण, शकीक, शवरूप, कामरूप, हरिगर्भ, विदर्भ, दुर्मट, वट, कीकट, दोरङ्गण, टङ्गण, नाट, भोट, कराट, करहाट, कर्णाट, कुन्तिका, अवन्ती, कर्णकुब्ज, कान्यकुब्ज, भोज, कम्बोज, तेजि, तुखार, विहार, बलहार, राजगृह, विदेह, वाह्लीक, चञ्चरीक, त्रिगर्भ, नवर्त्तादिषु देशेषु रागाः प्रचरन्तीति ।

*अथ प्रचरतां द्विचत्वारिंशद्रागाणां पुंस्त्रींभेदेन नामान्याह—*

मालवश्चैव मह्लारः श्रीरागश्च वसन्तकः ।
हिल्लोल श्चाथ कर्ण्णाट एते रागाः षड़ीरिताः ॥ ५

*अथैषां प्रत्येकं स्त्री संख्यां स्त्रीनामानि चाह—*

धनासी मालसी चैव रामकेरी च सिन्धुड़ा ।
अश्ववारी भैरवी च मालवस्यप्रिया इमाः ॥ ६
वेलावली च पुरवी कानड़ा माधवी तथा ।
कोड़ा केदारकाचैव मह्लार - दयिता इमाः ॥ ७
श्री गान्धारी च सुभगा गौड़ी कौमारिका तथा ।
वेलोयारी च वैरागी श्रीरागस्य स्त्रियः स्मृताः ॥ ८
तोड़ी च पञ्चमी चैव ललिता पठमञ्जरी ।
गुज्जरी च विभाषा च वसन्तदयिता इमाः ॥ ९
मायूरी दीपिकाचैव वेशकारी च पाहिड़ा ।
बराड़ी मारहाठी च एता हिल्लोलयोषितः ॥ १०
नाटिका चाथ भूपाली रामकेली गड़ा तथा ।
कामोदी चाऽथकल्याणी कर्णाटस्य प्रिया इमाः॥ ११

*अथ रागाणां पुंस्त्रीविवेचने नारदः फलमाह—*

रागञ्चेदालपेत्पूर्वं तत्पत्नीं तदनन्तरम् ।
अन्यपत्नी न गातव्या नृपाज्ञायां न दूषणम् ॥ १२

36

*अथ रागाणां निर्णयोऽशक्य इत्याह—*

देशे देशे भिन्ननाम्नां रागाणां तत्वनिर्णयम् ।
कोऽपि कर्त्तुं न शक्नोति निरणायि न तन्मया ॥१३

*अथ रागाणां षाड़वौड़व संपूर्ण भेदत्रय कथनम्—*

षाड़-वौड़व-संपूर्णा रागाः स्युस्त्रिविधामताः ।
षड्भिः स्वरैः समुथ्थाः ये षाड़वास्ते प्रकीर्त्तिताः ।
पञ्चभिस्त्वौड़वा पूर्णस्वरैः संपूर्णकाः मताः ॥ १४

*अथ षाड़वौड़वसंपूर्णरागाणां गायनफलमाह—*

संग्रामे वीरतारूपलावण्य - गुण - कीर्त्तने ।
गाने षाड़ब - रागाणां गदितं पूर्व–सूरिभिः ॥ १५
व्याधिनाशे शत्रुनाशे भयशोक - विनाशने ।
औड़वास्तु प्रगातव्याः ग्रहशान्त्यर्थकर्मणि ॥ १६
आयुर्धर्मयशः कीर्त्तिबुद्धि-सौख्य-धनानि च ।
राज्याभिवृद्धिः सन्तानः पूर्णरागेषु जायते ॥ १७
अन्येऽपि सन्ति भूयांसो रागाः संकीर्णलक्षणाः ।
ये ये यथा श्रुता देशे ज्ञेया स्ते ते तथा बुधैः ॥ १८

*अथ रागाणां ध्यानमाह—*

नितम्बिनीचुम्बित वक्त्रपद्मः शुकद्युतिः कुण्डलवान् प्रमत्तः ।
संगीतशालां प्रविशन् प्रदोषे मालाधरो मालवरागराजः ॥ १९
नीलोत्पलं कर्णयुगे दधाना श्यामा सुकेशी च सुमध्यभागा ।
इषत्सहासाम्बुजवक्त्ररम्या धनासि सा पद्मसुचारुनेत्रा ॥ २०
करे विधूताम्बुजयुग्मरम्या चेतस्ततश्चारु विलोकयन्ती ।
कण्ठस्फुरन्मौक्तिकरत्नहारा सा मालसी संकथिता विचित्रा ॥ २१
प्रतप्तचामीकर - चारुवर्णा कर्णावतंसं कमलं वहन्ती ।
पौष्पं धनुः पौष्पशरं दधाना चन्द्रानना रामकिरी प्रदिष्टा ॥ २२

सदिन्द्रनीलद्युतिरम्बुजाक्षी प्रवादयन्ती कपिलासयन्त्रम् ।
विचित्ररत्नाभरणा सुकेशी सा सिन्धुड़ा कान्तसमीपसंस्था ॥ २३
जवा-प्रसून-द्युतिविम्ब-वक्त्रा शुकं च पद्मं करयोर्दधाना ।
क्षौमांशुकाच्छादितगात्रयष्टिर्महाविदग्धा कथिताऽश्ववारी ॥ २४
चन्द्रप्रभा चारुमुखी सुनेत्रा विद्याधरी नृत्यकलां वहन्ती ।
पिकस्वराऽतीव मनोहराङ्गी सा भैरवीयं कथिता मुनीन्द्रैः ॥ २५
विहारशीलोऽति सुकान्तमूर्त्तिः कान्ताप्रियो धार्मिकवृत्तिशीलः ।
कामातुरः पिङ्गलनेत्रयुग्मो मल्लाररागः कुसुमप्रियश्च ॥ २६
संकेतदीक्षां दयितस्य दत्वा वितन्वती भूषणमङ्गयष्टेः ।
मुहुः स्मरन्ती स्मरमिष्टदेवं वेलावली नीलसरोजकान्तिः ॥ २७
स्वकान्त - संपादित - भूरिपत्रावलिं वहन्ती कुचकुम्भयुग्मे ।
दूर्वादलश्यामतनुः सकामा प्राणाधिका सा पुरवी प्रदिष्टा ॥ २८
अशोकवृक्षस्य तले निषण्णा वियोगिनी लास्यकलाञ्चिताङ्गी ।
विभूषणाढ्या जटिलैकवेणी सा कानड़ा हेमलतेव तन्वी ॥ २९
संग्रन्थ्य संग्रन्थ्य गले ददाना प्रसूनमालां दयितस्य वाला ।
गौरी सुकान्ताननचुम्बितास्या सा माधवी माधविका निकुञ्जे ॥३०
सत्कच्छपीं वादयतः स्वभर्त्तुर्या लास्यमभ्यस्यति संमुखस्था ।
सदैव तालारहिता च वाला कोड़ा करालाभ्रमिता स्मृता सा॥ ३१
स्नात्वा समुत्तीर्णवती सुदेहा केशाग्रनिःस्यन्दितवारिविन्दुः ।
निष्पीड़यन्ती स्तिमितांशुकान्तं केदारिका व्यक्तपयोधरश्रीः ॥ ३२
लीलाविहारेण वनान्तराले चिन्वन् प्रसूनानि वधूसहायः ।
विलासिवेशोचितदिव्यमूर्त्तिः श्रीराग एष प्रथितः पृथिव्याम् ॥ ३३
सन्ध्याकाले वेश्मनि प्राणवन्धोः स्कन्धे वीणां वादयन्ती दधाना ।
ताराहाराधातुचित्रान्विताङ्गी श्रीगान्धारी गन्धमाल्यानिशान्ते॥ ३४
रसपदार्थ - विवेचनकौतुकं विदधती कवितोचितसंसदि ।
स्वकवितामृतभावनतत्परा भगवती सुभगा समुदीरिता ॥ ३५

३४

पुष्पोद्याने सार्द्धं मालीकलापैः क्रीड़न्तीयं कोकिलाकाकलीभिः ।
वामा शामा सद्गुणप्रेमसीमा गौड़ी गौरी गौरवेशा प्रदिष्टा ॥ ३६
अट्टालिकायां स्फुटकौमुदीभिः प्रकाशितायां रजनीविहारे ।
द्यूताय कान्तेन समं वसन्ती कौमारिका कामकलां वहन्ती ॥ ३७
गौरीपादाम्भोजकावर्च्चयन्ती गान्धर्वीभी रत्नसानुप्रदेशे ।
नानारत्नोपायनैर्भक्तिभावै र्वैलोयारी कथ्यते बालिकेयम् ॥ ३८
उल्लासयन्ती यत केशवेशं सुमालती-माल विशेषकान्त्या ।
गृहाधिपप्राणनिवन्धनज्ञा वैरागीणीयं कथिता मनोज्ञा ॥ ३९
चूताङ्कुरेणैव कृतावतंसो विघूर्णमानारुण - पद्मनेत्रः ।
पीताम्बरः काञ्चन चारुदेहो वसन्तरागो युवतिप्रियश्च ॥ ४०
उन्निद्र - पङ्केरुह - चारुनेत्रा कुरङ्गशावं कलमाङ्कुरेण ।
सम्भावयन्ती विपिनोपकण्ठे तोड़ीयमिन्दीवरदामरम्या ॥ ४१
संगीतगोष्ठीषु गरिष्ठभावं समाश्रिता गायक - सम्प्रदायैः ।
खर्वा क्वणन्नूपुरपादरम्या सा पञ्चमी पञ्चमवेदविज्ञा ॥ ४२
शिखिनि केशचयस्य सुसंयमं विदधती शयनोत्थितवत्यसौ ।
विलुलितालकवल्लिवृतानना सुललिता ललिता कलिता बुधैः ॥ ४३
सखीकलापैः परिहासशीला क्वचित् समस्यां परिपूरयन्ती ।
पत्रावलीं सत्कमलं वहन्ती सद्युक्तिशीला पठमञ्जरीयम् ॥ ४४
कर्णोत्पलालम्बिमधुव्रतानां सुश्रृण्वती मंजुलकूजितानि ।
कान्तान्तिकं गन्तुमना प्रदोषे सा गुज्जरी वेशकलाञ्चिताङ्गी ॥ ४५
अध्यापयन्ती निजशिष्यवर्गं सुगीतशास्त्राणि विचारयन्ती ।
मनोहरा हारलताभिरामा समस्तभाषाकुशला विभाषा ॥ ४६
हालाविलासेन पतन् पृथिव्यां रुषार्पितस्तत्क्षणमालिवृन्दैः ।
उल्लोलयन गीतरसै र्विदग्धान् हिल्लोलरागः कथितो विदग्धैः ॥ ४७
मयूरकेकाश्रवणोल्लसन्ती मयूरिकां वीक्ष्य मुदं वहन्ती ।
मयूरिकापिच्छभरं दधाना मयूरिका संकथिता गुणज्ञैः ॥ ४८

प्रदोषकाले गृहदेहलीषु प्रदीप - हस्तारुणगात्रयष्टिः ।
सीमन्तसिन्दूरविराजमाना सुचारुमाल्या किल दीपिकेयम् ॥ ४६

सार्द्धं सखिभि र्विजने वसन्ती विचित्रवक्षोजयुगक्षतानि ।
निरीक्षमाणा मणिदर्पणेषु सा वेशकारी कथिता गुणज्ञैः ॥ ५०

भर्त्तु र्दधाना चरणारविन्दं निषेधयन्ती परदेशयानम् ।
प्रकामलोलाक्षियुगा प्रमुग्धा सा पाहिड़ा संकथिता कवीन्द्रैः ॥ ५१

कर्णे दधाना सुरपुष्पयुग्मं सुवृत्त - वक्षोज - मनोहराङ्गी ।
स्मेरानना चारु विलोलनेत्रा गौराङ्गयष्टिः कथिता वराड़ी ॥ ५२

उत्फुल्लमाना प्रथमे विभावे मानं पुनः कर्त्तु मनाश्रिरेण ।
ऋृजुस्वभावा निभृतं वदन्ती सा मारहाठी हटकेलितुष्टा ॥ ५३

कृपाणपाणि स्तुरगाधिरूढो मयूरकण्ठोपमकण्ठकान्तिः ।
स्फुरच्छितोष्णीषधरः प्रयाति कर्णाटरागो हरिणान्निहन्तुम् ॥ ५४

चिरं नटन्ती स्वरभङ्गिमाढ्या संप्रेरयन्ती नटकर्म विज्ञान् ।
स्वनृत्यगीतादि कृतावधाना नाटी सुनाट्यप्रकटेयमुक्ता ॥ ५५

स्व - नायकं पुष्पलताधिरूढं संपन्नगीतं समवेक्षमाणा ।
प्रचीयमाना कुसुमानि शश्वद् भूपालिका सा स्खलदुत्तरीया ॥ ५६

स्वर्णप्रभा भास्वर- भूषणाढ्या नीलं निचोलं वपुषा वहन्ती ।
कान्ते पदोपान्तमनुश्रितेऽपि मानोन्नता रामकिरी प्रदिष्टा ॥ ५७

विशेषवैदग्ध्यरतिः समस्त - कलाविलासेन विमोहयन्ती ।
बृहन्नितम्बोपरिपुष्टदेहा गड़ा प्रगल्भा स्तनभारनम्रा ॥ ५८

भर्त्तासमं पार्थसि हेमवर्णा पयोविहारेण सरोरुहाणि ।
विचिन्वती सौरभमोदमाना कामोदिका सा कथिता गुणज्ञैः ॥५६

नरेन्द्ररूपं प्रियवर्ग – भूपं गत - प्रचारेण कृत प्रणामा ।
अनेक भव्यान्तर रूपयुक्ता कल्याणिका सा कथिता गुणज्ञैः ॥ ६०

इति रागरागिणीध्यानप्रकरणं समाप्तम् ॥

*अथ रागाणां गायनकालनिर्णयमाह—*

श्रीपञ्चमीं समारभ्य विष्णोः सन्तान(शयन)मेव च।
तावद्वसन्तो गीयेत प्रभाते भैरवादिकम्॥ ६१
मध्याह्ने तु वराड्यादेः सायं कर्णाटनाटयोः।
श्रीरागमालवादेस्तु गाने दोषो न विद्यते॥ ६२
इन्द्रपूजां समारभ्य यावद्गिरिसुतार्च्चनम्।
तावदेव समुद्दिष्टं गानं वै मालवश्रियः॥ ६३
प्रातर्गेयास्तु देशाक्षो ललितः पठमञ्जरी।
विभासो भैरवी चैव कामोदो गुण्डिकेर्यपि॥ ६४
एका वराड़ी मध्याह्ने सायं कर्णाटमालवौ।
नाटश्चैव विशेषेण शेषा गेयास्तु सर्वदा॥ ६५
हिल्लोलश्च वसन्तश्च वसन्ते रञ्जकावुभौ।

*अथ नाटादि रागाणां गायन-निषिद्धकालमाह—*

नाटो गौड़ी वराड़ी च गुज्जर देशिरेव च॥ ६६
पूर्वाह्ने गानमेतेषां निषिद्धमिति तद्विदः॥
नैवापराह्ने गातव्यौ भैरवीललितौ क्वचित्॥ ६७
एवं तु वहुधाचार्यैं र्गाने कालः समीरितः।
यस्मिन् देशे यथाभीष्टं गीतं विज्ञस्तथाचरेत्॥ ६८

*अथ रागैर्विरतानां गीतानां वीरादि रसेषु गायनकालमाह–*

दिवसः प्रथमे यामे रसोवरः प्रकाशते।
अत उद्र्ध्वं रौद्ररसं, विदग्धा प्रहरद्वये।
चतुर्थे यामे करुणो रस स्तत्र उदाहृतः॥ ६९
सायं ज्योत्स्नां च शृङ्गारो वीभत्साद्भुतकौ निशि।
तमिस्रायामर्द्ध रात्रे वर्णनीयो भयानकः॥ ७०
चन्द्रोदये प्रभाते च रसः शान्त उदाहृतः।
वर्णनीयो दिवा हास्यो रसानां काल ईदृशः॥ ७१

*अथ रसानां मध्ये स्त्री, पुरुष, नपुंसक भेदमाह—*

वीभत्सः करुणो योषित् हास्यश्चाद्भुत एव च।
शान्तश्च षण्ढः विज्ञेयाः शेषाः स्युः पुरुषा रसाः ॥ ७२

*अथ रागाणामकालगाने दोषमाह—*

उल्लंघ्य समयं रागान् यस्तु गायति गायकः।
तस्य कुर्वन्ति गन्धर्वाः सर्वनाशं न संशयः ॥ ७३

*अथ रागाणामकालगायने दोषापवादमाह—*

रागे यत् प्रोक्तमस्माभिः समयादिरसादि च।
तत्सर्वमन्यथाऽपि स्याद्राज्ञामाज्ञावशादिव ॥ ७४
श्रेणीवंधे नृपाज्ञायां रङ्गभूमौ न दोषदम् ॥ ७५

*अथ रागाणामकालगायनदोषप्रायश्चितमाह—*

लोभान्मोहाच्च ये केचिद् गायन्ति च विरागतः।
सुरसा गुज्जरी तेषां दोषं हन्तीति कथ्यते ॥ ७६

*अथ सर्वकालगेय रागानाह—*

वसन्ते रामकेरी च गुज्जरी सुरसाऽपि च।
सर्वस्मिन् गीयते काले नैव दोषोऽभिजायते ॥ ७७

*रागाणां गायने नारदस्तु विशेषमाह—*

दशदण्डात्परं रात्रौ सर्वेषां गानमीरितम्।

*अथ गीतभेदानाह—*

निवद्धमनिवद्धं च गीतं द्विविधलक्षणम् ॥ ७८
निवद्धं च भवेद्गीतं तालमानरसान्वितम्।
छन्दो गमक धात्वङ्गं वर्णादि-नियमैः कृतम् ॥ ७९

*अथानिवद्धगीतलक्षण माह—*

अनिवद्धं भवेद्गीतं वर्णादि - नियमं विना।

*अथ आलप्ति लक्षणमाह—*

वर्णालङ्कारसंयुक्ता गमक - स्थान - चित्रता ।
आलप्ति रुच्यते तज्ज्ञै भूरिभङ्गिमनोहरा ॥ ८०

अन्यः पक्षोऽस्ति—

आलप्तिश्चानिवद्धं स्या द्रागालपनरूपिणी ।

*अथालप्ति भेदद्वयमाह—*

सा द्विधा गदिता रागरूपकाभ्यां विशेषणात् ।
नोक्ता वाहुल्य भीत्या चालप्ते वहुविधा भिदाः ॥८१

*अथ गीतस्य शुद्धादिभेदत्रयमाह—*

शुद्धं छायालगं, क्षुद्र मिति तच्च त्रिधा मतम् ।

क इतरः पक्षोऽस्ति—

शुद्धं-सालुग संकीर्णभेदाद्गीतं त्रिधान्वितम् ॥
शुद्धं तु शिव-रूपेण शक्तिरूपेण सालुगम् ।
द्वयोर्मिश्रं तु संकीर्णमतस्तत्त्रिविधं मतम् ॥ ८३

*अथ शुद्धगीत लक्षण माह—*

आलगैर्धातुभिश्चाङ्गैः संयुक्तं शुद्धमुच्यते ।

*अथ छायालग गीतस्य लक्षणमाह—*

शुद्धं सा लगतिछ्रायां यत्र·छायालगं विदुः ॥ ८४
संकीर्णशब्देन क्षुद्रगीत मेवोच्यते ।

*अथ शुद्धगीतस्यापि प्रबन्धमाह—*

प्रकृष्टो यस्तु वन्धः स्यात्स प्रवन्धो निगद्यते ॥

*अथ प्रवन्धांगमध्ये प्रथमतः धातुमाह—*

प्रवन्धायवे धातुरिति । अवयवो भागविशेषः ।
स तु चतुर्विधः उद्वाह, मेलापक, ध्रुवा, भोगा इति ॥
उद्वाहः प्रथमो भागस्ततोमेलापकः स्मृतः ।
ध्रुवस्तच ध्रुवः पश्चादाभोग (मेलापः) श्चान्तिमोमतः ॥ ८५

ध्र वत्वान्निश्चलत्वात् पुनः पुनरुपादानाध्र ुव इत्यर्थः ।
आभोगे कवि नाम स्यात्तथा नायक नाम च ॥
यत्र कविनाम स अभोग एव ।
अभोगे एव कविनाम कर्त्तव्यमित्यभिप्रायः ॥

*अथ प्रवन्धाङ्गान्याह—*

गमकादिरुद्तेन तालः पाटःस्वरस्तथा ।
प्रवन्धांगं षड्ङ्गानि कथितानि विरञ्चिना ॥ ८६
स्वरकम्पो गमकथा वित्तदं गुणकीर्त्तनम् ।
तेने ती तेन कः शब्दो मङ्गलार्थः प्रयोजकः ॥ ८७
आड़े त्यादिकास्तालाः, धु धु धु धु गु धुगित्याद्याः पाटीः ।
स रि ग म प ध नीति निर्द्धिष्टाः स्वराः ॥

*अथ प्रवन्धनां जातिमाह*

जातयः-स्युः प्रवन्धानां तथैव मुनि सम्मताम् ।
मेदिनि नन्दिनी दीपिन्यथ स्यात्पाविनी तथा ।
तारावली तथैत्यासां लक्षणं प्रतिपद्यते ॥ ८८
षड्ङ्गा मेदिनी प्रोक्ता पञ्चाङ्गा नन्दिनी तथा ।
दीपिनीचतुरङ्गीस्यात्पाविनी त्रङ्गिका मता ।
द्व्यङ्गी तारावली प्रोक्ता मुनिभि र्भरतादिभिः ॥ ८६
एते नायकाङ्गः प्रवन्धो न भवतीति सूचितम् ।
एकेन तालेन भवेत्प्रवन्ध स्तालद्वयेन त्रिभिरेव लोके ।
चतुर्भिरेवाऽन्तिमपंचभिर्वा यथेच्छया वा परिकल्पनीयः॥ ८०
एतेन प्रवन्धगीते तालप्रयोगविधानमुक्तम् ।

*अथ प्रवन्ध गीतेषु तालरागपाटादीनां विधिमाह—*

वहुतालः प्रवन्धास्तु रागैर्वहुभिरेव च ॥
आदिमध्यान्त विन्यासात्पाटादीनां विधानतः ।
भेदा वहुतरा स्तेषां नोक्ताः विस्तारशङ्कया ॥ ६१

*अथ रागादीनां विहारत्वे वाक्यमाह—*

न रागाणां न तालानां न वाद्यानां विशेषतः ।
नाऽपि प्रबन्धगीतानामन्तो जगति विद्यते ॥ ६२

तथापि प्रबन्धेभ्यः केचित्प्रबन्धाः लक्षणैर्दृश्यन्ते ।
वर्णस्य शक्तेश्च विशेषतः स्यु र्नामानि कार्याणि तथापि तेषाम् ।
एवं प्रबन्धा बहवः प्रदिष्टाः स्युर्धातुर्मातुः प्रगुणाङ्किताश्च ॥ ६३

विष्णुप्रकाशको नाम्ना यथास्याद्विष्णुवर्णितः ॥ ६४
......उदाहरणमित्याह धनाश्रीरागेण—
जयनारायण इत्यादि गीतम्—

*अथ मातृका-प्रबन्धमाह—*

एकैक-मातृका-वर्ण-पूर्विकाणि पदानि चेत् ।
क्रमेण यत्र गीयन्ते मातृका सा त्रिधा मता ॥ ६५

*अथ मातृका-प्रबन्धस्य भेदत्रयनाम-कथनम्—*

दिव्या च मानुषी दिव्यमानुषी चेति सा त्रिधा ।

*अथ दिव्या-मातृका प्रबन्धलक्षणमाह—*

दिव्या संस्कृतया वाचा मार्ग-तालेन गीयते ॥ ६६

*अथ मानुषी-मातृकाप्रबन्धस्य लक्षणमाह—*

मानुषी प्राकृतगिरा देशीतालेन निर्मिता ।

*अथ दिव्यमानुषी-मातृका प्रबन्धगीतलक्षणमाह—*

द्वयोर्मिश्रयणादुक्ता मातृका दिव्यमानुषी ॥ ६७

*अथ मातृकाप्रबन्धस्य तालरागयोरनियममाह—*

अनेनैकेन रागेण बहुभिर्वा प्रयोगतः ।

*अथ मातृका-प्रबन्धस्य महिमानमाह—*

सर्वमन्त्रमयी ह्येषा सर्वसिद्धिप्रदायिनी ॥ ६८
मार्गदेशी - तालौ वक्ष्येते ।
तयोर्मध्ये येन केन चिन्निर्मितेत्यर्थः ॥
इति त्रिमातृका प्रबन्धः ॥

*अथान्य-प्रबन्धविषयमाह—*

एलाद्या दुष्कराः सन्ति प्रबन्धाः मुनिभाषिताः ।
तेभ्यः षड्विंशतिः प्रोक्ता हरिनायकसूरिणा ।
कथ्यन्ते क्रमशस्ते च नाममात्रेण केवलम् ॥ ६६
पञ्चताले स्वरोवर्ण - स्वर - श्चैवाङ्कचारिणी ।
स्वरार्थो मातृका चैवन्तथा राग-कदम्बकः ॥ १००
स्वरत्वं करणं वर्त्मन्यथ तालार्णवस्तथा ।
श्रीरङ्गः श्रीविलासश्च पञ्चभङ्गी ततःपरम् ॥ १०१
पञ्चाननो मातिलकौ सिंहलील स्तथापरः ।
त्रिभङ्गी हंसलीलश्च तथा हरि-विलासकः ॥ १०२
सुदर्शिनः स्वराङ्गश्री वर्द्धनो हर्षबर्द्धनः ।
वीरश्रीमङ्गल श्चैव लाहड़ी च प्रकीर्णिताः ॥ १०३
नवरत्नाभिधः प्रोक्त स्तथा सरभ-लीलकः ।
कण्ठाभरणनामाचेते ते षड्विंशतिर्मताः ॥ १०४
तेषां मध्ये प्रयोगार्हान् प्रबन्धान् कतिचिद् ब्रुवे ।
तेभ्योऽन्यः कायवालः स्यात् स एवादौ निरूप्यते ॥ १०५

*सकायबाल-प्रबन्धो यथा—*

यत्र तालाः प्रदर्श्यन्ते पाटे मात्रेण केवलम् ।
पदानां कल्पनाभोगे कायवालः स इर्यते ॥ १०६

गीतप्रकाशे तूदाहरणमस्ति । इति कायवालप्रबन्धः ॥

*अथ तालार्णव प्रबन्धमाह—*

तालार्णवो भूरितालैर्भवेत् संस्कृत-भाषया ।
योगाद् गद्यस्य पद्यस्य स द्विधा परिकीर्त्तितः ॥ १०७

इति तालार्णव प्रबन्धः ॥

*अथ सिंहलील-प्रबन्धमाह—*

स्वरैः पाटैश्च विरुदैस्तेनकै र्यो विरच्यते ।
सिंहलीलेन तालेन सिंहलीलः स उच्यते ॥ १०८

*सिंहलीलतालस्तु 'सङ्गीत चूड़ामणौ' यथा—*

सिंहलीले लघोरन्ते (द्वि) दतयं परिकीर्त्तितम् ॥

इति सिंहलीलः प्रबन्धः ॥

अन्ये ये तु प्रवन्धाश्च पञ्चताले स्वरादयः ।
मया तु ग्रन्थवाहुल्यभीत्यानोक्तास्तु तेऽपि च ॥ १०६

*अथ सूड़प्रवन्धमाह—*

सूड़-प्रवन्धोऽपि शूरगीतमध्ये वहुभिर्लिखितः ।

*अथ सूड़प्रवन्धलक्षण माह—*

ताला न वादिका यत्र पाटा विरहिता यदि ।
सूड़प्रवन्धः कथित एकराग-निवेषितः ॥ ११०

अन्यमते तु—

आदि तालादिकं यत्र मध्ये भालाप-मुच्चरन् ।
अन्तैकताली कथिता सापि सूड़प्रवन्धका ॥ १११

इति सूड़प्रवन्ध-लक्षणम्

चक्रे नृपो यां भुवि केरलायां श्रीनीलकंठोऽपि च नाट्यपूर्वाम् ।
मनोरमाख्यां तु गतो द्वितीयः पादस्तु तस्यां बुधशर्मदात्र्याम् ॥ १११

---

## तृतीयः पादः

*अथ छायालगसूड़लक्षणमाह—*

भुक्तानामेव भावनां छाया मात्रं भवेद्यदि ।
छायालगस्तु सूड़ोक्तः मुनिभिर्भरतादिभिः ॥ १

छायालगश्चादि यति स्ततः......... सारिमष्टैस्त्रिपुटा तु झम्पाः ।
साद्रूपकाख्यः पुनरेकतालिः तालैस्त ते ...... मवरः प्रदिष्टः ॥ २

*अथ ध्रुवलक्षणतालमाह—*

निःसारि च यतिश्चैव द्वयं तु ध्रुवलक्षणम् ।

*अथ मष्टकलक्षणतालमाह—*

मश्टृश्चेत्येकताली च मश्टृलक्षण-भावितः ॥ ३

*अथ ध्रुवलक्षणतालमाह—*

आदिरूप - त्रिपुटकात्सूड्ड्झम्पाककुड्ककाः ।
ड़पाड्ड़मानः सप्तैते ध्रुवमश्टृद्वयात्मिकाः ॥ ४
यया तु दुष्करत्वात्-ध्रुवकादयो न लिखितः ।

*अथ गायने ध्रुवकस्य प्राधान्यतामाह—*

यथैक्यं न विना ज्ञानं न ध्यानं स्थिरतां विना ।
न शुद्धिश्च विना दानं न गानं ध्रुवकं विना ॥

*अथ ध्रुवस्य लक्षणमाह—*

ज्ञेयः स ध्रुवलक्षणो यदि भवेदुद्ग्राह एव ध्रुव-
स्तूच्चैः खण्डमिहर्द्धधातु गदितद्वर्गेयमेवोच्चकैः ॥ ६
प्रथमखण्डाऽपेक्षया द्वितीयखण्ड उच्चैर्गेयः ।
यतिमात्राधिकः प्रथमखण्डः सममात्रो वेति केचित् ॥

उक्तं द्विखण्डमुद्ग्राहे द्विखण्डं ध्रुवके मतम् ।
ततो द्विखण्डयाभोगे तालवर्णरसैः समम् ॥७
उद्ग्राहं प्रथमं गीत्वा ध्रुवं गायेत् ततः परम् ।
ततोऽन्तरा ध्रुवस्तस्माद्भोग स्याद्ध्रुवकस्ततः ॥
गीत्वा पूर्वं पदन्यासो यत्रासौ ध्रुवको मतः ।

*अथोदाहरणं मल्हाररागेण—*

जय जय शङ्कर किङ्कर जनभव भवभञ्जन जनरञ्जन आ ।
नव शशिखण्ड शिखण्ड चण्डकर शशधर वह्निविलोचन आ रे ।
इति प्रथम खण्डः ॥

परशु-कपाल-कुरङ्ग-डमरुधर हर हर दुरित दुरन्तभयम् ।
सुर-तटिनीयुत-मुकुट-महानट-गौरलम्पट त्रि आ ई या ई या रे ॥
इत्युच्चः खण्डः ॥

*अथ खण्डद्वयगीतं ध्रुवः गेयमिति ध्रुवः—*

नमदमरेश-किरीट-मञ्जुमणि-मार्जित-नख ते विभो ।
भव भव शरणं भूति-विभूषित कृष्णदास इति गायति आ रे ॥
ततस्त्रि आ ई आरे आरे, इत्यादयो निरर्थकाः सतालाः
गीतलालित्यायालं गायकैः प्रयुज्यन्ते ॥

*अथ मभृलक्षणमाह—*

सस्यान्मष्टकलक्षणो यदि समाबुद्ग्राहका भोगका ।
...हा द्विगुणोऽथसार्द्धगुणकोवास्याध्र वस्तत्र च ॥
उदाहरणमादिताले मल्हार रागेण—
द्वारावती पुरमनुवलं-संयुत उद्धवसहितो नियतमयम् ।
अक्रूरोन्तमणतिवो नन्द निरुगमसमिति त्रिआई आई आरे ॥
इत्युद्ग्राहः । मुकुन्दनृपति स जयति आ । विपुल भक्तितया
हरिचरितं हन्त निखिलमनुकरोति आरे ॥
इति सार्द्धैकगुणो ध्रुवः ॥

विनता-नन्दन-केतु रम्य-चक्रकरशोभी,
सिन्धुसमीपे सततं विहरति कृष्णदास ई विरचति आरे ॥

इत्याभोगः ॥

अमी उक्तप्रवन्धेषु वाहुल्येनापि संस्थिताः ।
मया तु ग्रन्थ-वाहुल्य-भीत्या न लिखितं पुनः ॥ ११
एक-द्वि-त्रि-चतुः खण्डैस्तालेषु विविधेषु च ।
उद्ग्राहादेः कल्पनां तु यथा लालित्यमाचरेत् ॥ १२

( लालित्यं रञ्जकता )

*अथ ध्रुवमभृ लक्षणयोर्भेदमाह—*

पादे तद्विगुणः सार्द्धैकगुणो वा मभृः ।

*अथ अवान्तर खण्डमाह—*

कुडुक्काद्येकतालीनां खण्डः षोड़शमात्रिकः ।
प्रान्तः खण्डश्चतुर्दशभिर्मात्राभि रूपकल्प्यते ॥ १३
मात्राभिरष्टभि भंङ्गीस्यादेवं भरतोऽब्रवीत् ।
खण्डो मात्रा चतुर्दशभिर्यति-त्रिपुटयोस्तथा ॥ ४१
भजी तु सप्तमात्रायां प्रान्तोपदशभिः स्मृतः ।
झम्पाऽडुतालयोर्वन्धोमात्राभिर्दशभिरूनविंशतिभिः कचित् ॥ १५
सर्वत्रैव हि पञ्चम्यां पञ्चम्यां भङ्गिरीरिता ।
खण्डो मात्रा चतुर्दशभिस्ताले निःसारि नामनि ।
षष्ठ्यां दशम्यां भङ्गीस्यात् प्रान्तो द्वादशभिर्भवेत् ॥१६
रूपके तु द्वादशभिर्मात्राभिः कथितो दलः ।
काप्येकादशभिः कार्य्य स्त्रिभिरेवाऽन्तिमो दलः ॥ १७
भंग्यन्तरीषु ........ वदत्येवं हि नारदः ।
अन्ये रूपकबन्धाख्या स्तालगानमनोहराः ॥
एकद्विमात्रकान्यूनाः सर्वे स्युः प्रान्तखण्डकाः ॥ १८

*अथ भङ्गीस्वरूपमाह—*

गीते भङ्गी - विशेषज्ञै रीषद्विश्रान्तिरुच्यते ।
सा तु यत्यात्मिका ज्ञेया यतिर्जिह्वोष्ठविश्रमा ॥ १६

*अथ तालानामावृन्तिमाह—*

ताश्च तालावृन्तयो तालकलानुसारेणालं, कलानां तालाना मावृन्तयो बहुतराः कल्पनीयाः ।

आवृन्तय स्त्वनियताः किलताल नाना-
मित्येव केचिदिह गीतविदो वदन्ति ॥
कलाः स्युः वहुतालेषु सिंहनन्दनकादिषु ।
आवृत्तिरेका कथिता त्रिष्वोद्ग्राहादिकादिषु ॥ २०

*अथ संगीत-कौमुद्यां सिंहनन्दनताले त्रिषुतद्ग्राहादिषु एकया आवृत्त्या उदाहरणगीतमाह—*

दधतं तं मुखशशिनमित्यादि गीते । कथमेकैवावृत्तिरिति न शंकनीयम् । विस्तरशंकया सर्वे ताला नोक्ताः ॥

*अथ एकतालादितालानां बन्धसमावेशमाह—*

एकतालि त्वादिताले ह्येकबन्धो विवक्षितः ।
यतितालत्रिपुटयोः समाबन्धः प्रकीर्त्तितः ॥ २१
झम्पक श्चाड्डुतालश्च रूपकोमश्रृकस्तथा ।
कुड्डोपाड्डौ च बन्धाश्च दशतालाः समाः स्मृताः ॥ २२
नीच सारिनाम्नः तालस्य समावेशो न कुत्रचित् ॥

*अथ तालाङ्ग-परिभाषामाह—(छन्दोरत्नाकरे )*

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतोरलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥ २३
म SSS , न ||| , भ S|| , य |SS , ज |S|, र S|S , स ||S, तं SS|
( गुरु S चिह्न, लघु । चिह्न )

गुरुरेको गकारस्तु, लकारो लघुरेककः।
प्लुतः पकार इत्येवं, दोहतः परिकीर्त्तितः ॥ २४
ग ऽ, ल ।, प ऽ (ऽ), द ० ॥

*अथानुद्रुतादि पञ्चतालज्ञानमाह—*

अनुद्रुतो द्रुतश्चैव लघुर्गुरुरतः परम्।
प्लुतश्चैव क्रमेणैव तालाङ्गानि तु पञ्चधा ॥ २५

*अथानुद्रुतादि पञ्चतालाङ्गानां प्रत्येकं नामपञ्चकमाह—*

अनुद्रुतं विरामश्च मात्रा तूर्यांश संज्ञकः।
अर्द्धचन्द्रस्तथा सत्यं विज्ञेयं नाम पञ्चकम् ॥ २६
अर्द्धमात्रं द्रुतं व्योम व्यञ्जनं विन्दुकं तथा।
मात्रकं सरलं ह्रस्वं लघुव्यापकमित्यपि ॥ २७
द्विमात्रं युगलं वक्रं गुरु दीर्घमिति स्मृतम्।
सामोद्भवं प्लुतं दीप्तं तथात्वस्तु-त्रिमात्रकः ॥ २८

*अथानुद्रुतादि पञ्चानामुत्पत्तिस्थानमाह—*

शिव-पूर्वाननाज्जातमनुद्रुतमिति स्मरेत्।
अघोरास्याद्द्रुतोत्पत्तिर्वामवक्त्राल्लघोरपि ॥ २९
सद्योमुखात्समुत्पन्नं द्विमात्रं चेति निश्चितम्।
उर्ध्ववक्त्रात्त्रिमात्रस्य जनिस्तु परिकीर्त्तिता ॥ ३०

*अथानुद्रुतादीनां वर्णमाह—*

अनुद्रुतस्य वर्णस्तु धूसरः परिकीर्त्तितः।
द्रुतोऽवदातवर्णः स्याल्लघुः स्यात्पीतवर्णकः ॥
द्विमात्रः पाण्डुवर्णः स्यात्त्रिमात्रश्चित्रवर्णकः ॥ ३१

*अथानुद्रुतादि पञ्चतालाङ्गानां देवतामाह—*

देवतानुद्रुताख्यस्य शरजन्मा प्रकीर्त्तितः।
द्रुतस्य देवता शम्भु र्लघोरद्रिपतेः सुता ॥
गौरिर्गुरो प्लुते स्रष्टा देवतानामिति स्थितिः ॥ ३२

*अथ द्रुतादीनां मध्ये के कति मात्रास्तदाह—*

लघ्वैकमात्रं तु गुरुर्द्विमात्रः, प्लुतस्त्रिमात्रो द्रुतमर्द्ध मात्रम् ।
अनुद्रुतं तु द्रुतकार्द्ध मात्रं, विराम इत्यस्य भवेच्च नाम ॥ ३३
अनुद्रुतं बिनाऽन्येषां संज्ञादल - गतात्मिका ॥

*अथ तालशब्दस्य व्युत्पत्तिमाह—*

समयस्य समत्वेन रञ्जकत्वेन चाऽधिकम् ।
तालयत्येष संगीतं यतस्तालो निगद्यते ॥ ३४

तालशब्दस्य प्रकारान्तरेण अन्यथा व्युत्पत्तिरस्ति । सा तु संगीतार्णव-चन्द्रिकायां विज्ञेया ॥

*अथ मकारादि-परिभाषाक्षराष्टगणोत्पत्तिस्थानमाह—*

उत्पत्तिर्मगणस्य स्यात् स्रष्टुः संमुख-वक्त्रतः ।
दक्षिणात्सगणस्यापि जगणस्यान्तराननात् ॥
पृष्ठतो वदनात्तद्वद्भगणस्योद्भवः स्मृतः ।
मगणाद्यगणो जातः सगणात्तगणस्तथा ॥
जगणाद्रगणो जातो भगणान्नगणः स्मृतः ॥ ३६

*अथ मकाराद्यष्टगणवर्णमाह—*

मगणः शोणवर्णः स्या द्यगणः कुन्दसन्निभः ।
रगणः पीतवर्णः स्या त्सगणो धूम्रवर्णकः ॥
तगणः पञ्चवर्णोऽपि जगणो रक्तवर्णकः ।
भगणः शुक्लवर्णः स्यान्नगणःश्चित्रवर्णकः ॥ ३८

*अथमकाराद्यष्टगणस्य शुभाशुभफलमाह—*

मगणे दृश्यते लाभो भक्ष-भोज्य-समाहितः ।
सर्वकार्याणि सिद्धयन्ति भयं तत्र न जायते ॥ ३९
नगणेऽभीष्टसिद्धिः स्यात्सौख्यं तत्र प्रजायते ।
न दुःखं विद्यते किंचिच्छुभं तत्र विनिर्दिशेत् ॥ ४०

भगणे कीर्त्तिमाप्नोति धनं चैवातिपुष्कलम्।
प्रायो हर्षमनाश्चैव सर्वभोगसमन्वितः ॥ ४१
यगणे जयमाप्नोति धनधान्यादि-सम्पदम्।
दासीदासौ सुखं वासः शोभनानि बहूनि च ॥ ४२
जगणे दृश्यते हानिः कार्य्यं चैव न सिद्ध्यति ।
मित्रैः सह विरोधश्च कलहो रोग एव च ॥ ४३
रगणे भयमाप्नोति विग्रहश्चैव निश्चयः ।
अर्थहानिश्च शोकश्च मृत्युहेतुर्न संशयः ॥ ४४
सगणे निष्फला चिन्ता भयं चैवातिदारुणम्।
आशा न विद्यते तत्र वांछितं च न सिद्ध्यति ॥ ४५
तगणे कार्य्यहानिश्चाऽप्यर्थनाशो भवेद्ध्रुवम्।
यत्र गच्छेत्पुनस्तत्र कार्यशून्यत्वमुद्दिशेत् ॥ ४६

*पुनरपि फलाफलमाह—*

शुभं कुर्वन्ति ते सर्वे प्रथमे ये चतुर्गणाः ।
शेषे गणाश्च चत्वारो विपरीत–फलप्रदाः ॥ ४७

*अथ मकाराद्यष्टगण प्रयोगमाह—*

प्रथम चतुष्कं हरिचरणेषु, शेषचतुष्कं तदरिगणेषु ।

*अथ मात्राप्रमाणमाह—*

पञ्चलघ्वक्षराण्युच्चार्यन्ते कालेन यावता ।
तावत् कालस्तु मात्रेति गदितं पूर्वसूरिभिः ॥ ४८

*अन्य मते तु मात्राप्रमाणमाह—*

जानु प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
याव-दुपयेति च तलं सा मात्रा परिकीर्त्तिता ॥ ४९

*अथ गुरुलघ्वक्षरनिर्णयः —*

सानुस्वारश्च दीर्घश्च विसर्गश्च गुरुर्भवेत् ।
वर्णः संयोग-पूर्वश्च तथा पादान्तगोऽपि वा ॥ ५०

*अनुद्रुतादीनामङ्गुलप्रमाण कथनम्—*

द्रुताश्रयं तु कथितं चतुरङ्गुलि-विस्तृतम् ।
लघुरष्टाङ्गुलः प्रोक्तः गुरुः स्यात् षोड़शाङ्गुलः ॥ ५१
प्लुतस्त्वष्टाङ्गुलश्चानुद्रुतः किंचित्करः क्रिया ॥

*कस्यचिन्मते यदङ्गुलप्रमाणमस्ति तदाह—*

त्रिभिरङ्गुलिभिः कार्याऽनुद्रुते च करक्रिया ।

*अथानुद्रुतादिपञ्चानां रेखान्यासमाह—*

तिर्यग्रेखाऽनुद्रुताङ्का शून्याकारं द्रुतं स्मृतम् ।
लघु ऋज्वलिकारेखा रेखाऽधो वक्रिता गुरुः ॥
प्लुतं गुरोरूर्द्ध्वरेखा तिर्यक् चेद्दक्षपार्शगाः ॥ ५४

*अथ द्रुतादीनां सशब्दनिःशब्दघातप्रकारमाह—*

उच्चैर्घातः सशब्दः स्या देक एव लघौ परम् ।
गुरौ घातद्वयं प्रोक्तमेको नादः परः स्वनः ॥
सोऽप्यूद्र्ध्वं याति च लघोरर्द्ध नादाद्द्रुताहतिः ॥
प्लुते घातः सशब्दः स्यादेको घातद्वयं ततः ।
तन्निःशब्दं त्वेक उद्र्ध्वं गता ते दपरस्त्वधः ॥ ५६

*अथ द्रुतादीनां चतुरङ्गुलादि घातनिर्वाहप्रकारमाह—*
*चूर्णकम्—*

चतुरङ्गुलशङ्कुं भूमौ निखन्य तच्छिखापर्यन्तं करमुत्तोल्य पातने यावान् कालस्तावता कालेन द्रुताघातः ॥ एवं लघौ वर्गः ॥

गुरौ तु षोड़शाङ्गुलात्मकं घातमष्टाङ्गुलतया द्विधा विभज्य तन्मूले अष्टाङ्गुल संमितया घातं दत्वा तदवधिकोऽस्वनोघातस्तूपरि देयः । घातकार दर्शनमात्रं कर्त्तव्यमित्यर्थः । एवं प्लुतेऽपि चतुर्विंशाङ्गुलेन त्रिधा विभज्य घाताः देयाः । हस्तक विशेषास्तु हरिनायकादावनुमेयाः ॥

५५९

अथ द्रुतादीनां मध्ये कस्य कुत्रघातोदेय इत्याह—

द्रुते लघोर्गुरोर्मूले प्लुत-मूले सशब्दकम्।
निःशब्दं तु गुरोर्मूर्द्ध्नि प्लुतमूर्द्ध्नि द्विवारकम्॥ ५७

अथ सशब्द निःशब्दयोरनित्यतामाह—

निःशब्दं तु सशब्दं स्यात्सशब्दमपि केचन।

एतदुदाहरणं 'प्रक्रिया कौमुद्यां' दर्शयति—

प्रतिज्ञाऽनुनासिक्याः पाणिनीयाः॥

अथ द्रुतादीनां अङ्गुल्या वादन-प्रकारमाह—

अङ्गुल्यग्रेण विज्ञेयः वादनं वै द्रुतस्य च।
शब्दाङ्गुल्या केवलया वादनं सरलस्य तु॥
शब्दाङ्गुल्या कुञ्चनाभ्यां वादनं तु गुरोर्भवेत्।
शब्दाङ्गुल्या कुञ्चनाभ्यां प्रसारेण प्लुतस्य च॥ ५६

अथानुद्रुतादीनामुत्पन्न प्रकारमाह—

राधाह्वाने प्लुतो जातो गुरुः शशिकला कृते।
लघुः कनकरेखायां पारिजाते द्रुतोदयः॥
अनुद्रुतस्य चोत्पत्तिः पद्माह्वानेव ......।
एवं सांकेतिके वेणौ कृष्णस्यासन् प्लुतादयः॥ ६०

भूतादीनां प्रकारान्तरेणापि 'संगीतार्णव चन्द्रिकायां' उत्पत्ति-विधिरस्ति। ये जिज्ञासवस्ते ततो जानन्तु।

अथ गीतवाद्य-नृत्यानां तालस्य मूलकारणत्वमाह—

न तालेन विना गीतं न वाद्यं तालवर्जितम्।
न नृत्यं तालहीनं च ततस्तालोऽत्र कारणम्॥ ६१

पुनस्तालस्याऽपि प्रधानतामाह—

विना तालेन गीतादेर्गीतशुद्धि र्न जायते।
कर्णधारं विना नाव इवातस्तान् प्रचक्ष्महे॥ ६२

५७

*अथ तालस्थित-देवानाह—*

तकारः शरजन्मास्याद्‌कारो विष्णुरुच्यते ।
लकारो मारुतः प्रोक्त स्ताले देवा वसन्त्यमी ॥ ६३

सर्वेषु तालेषु सत्सु प्रवन्याङ्गत्वात् वाद्यादि दशतालान् कलावहुलतया शशिप्रिय नलकूवर वादकाकुल सिंहनन्दनानतो वक्ष्यामः ॥

*के इत्याह—*

आदिर्यत्र निःसारिश्च मश्टझम्पक रूपकाः ।
त्रिपुटो ह्यड़तालश्च त्वेकताली ततः परम् ॥
कुड़्कतालश्च कथिता दशधेति मुनीश्वरैः ॥ ६४

इदानीं तु दशतालानां मध्ये आदितालस्य विचार रासनामपूर्वक दशतालानां कलानिरूपणं च हकारोदाहरण गीतस्वर करणानि यथाक्रमं कथयिष्यामि ॥

एक एव लघुर्यत्र त्वादितालः स कथ्यते ।
गुरुस्तत् पुरतो वाच्यः प्रायेणैतन्निदर्शनम् ॥ ६५

*चूर्णकम्—*

संप्रति गायक परं गरीयसतया न विलम्बितलयद्रुतत्रयेणादितालस्यावृत्तिद्वयं गायन्ति । न तत्कुत्रापि विलोक्यते । अहं पुनर्मन्ये द्रुतचतुष्टयेन लघुद्वयं भवति । तालावृत्ति द्वयं तु द्रुतानि विभज्य एकं विश्राम्य ताला वृत्तिद्वयं समर्थयन्ति ॥

*अथ आदितालस्य रासनामोच्यते—*

आदिरेकेन लघुना रासोऽयं कश्चिदुच्यते ॥ ० ॥ ल ।

*अथ च हकारः—*

दिगि दिगि थेईयां त ताताथेई । ताथेई थो दिगि ताता
ता ता ता ता ता ता ॥

*अथोदाहरणं । गीतम्—*

जय सुर नायक, वाञ्छित दायक ॥ इति

*अथ स्वरकरणम्*—

सा सा सा रि ग म रि ग म ग ग म प ध प ध नि-
म ग रि सा ध नी म ग सा ॥
द्रां द्रां द्रां द्रां द्रिमि द्रीमि द्रिमि कट ते नाभं ते नाभं-
ते न्ना ते ना ई या। इत्यादि ता तो गतः ॥

*अथ यतिः*—

लघु द्वन्दाद्द्रुतद्वन्दं यति-ताले प्रकीर्त्तितम्।
सा पुनर्द्विविधा प्रोक्ता शुद्धा च त्रिपुटान्तरा ॥
ल ल क् क् ॥ ० ० ॥

*अथ च हकारः* —

दिगि दिगि थेई थेई थो, दिगि ता ता ता ता ता ता ॥

*ततः शुद्धयत्यामुदाहरणम् ॥ गीतम्*—

जय जय नरकनाशन, दुष्टसंचय विहितशासन, रे ॥

*अथ स्वर करणम्*—

आ आ सा सा सा सा रि ग म रि ग म प म प ध
म ग रि सा ध नि नि ध न आ आ ॥
ते ना ते ना तेनाना तेनाते नाते नातेना उँ
तेना तेना तेना ई आ आ ॥

*नाटरागसूड़े ॥ गीतम्*—

जय जलनिधि। उत्तरतीरे नीलनगशिखरे ब्रह्मप्रकाश आ ॥
कपटे दारु शरीर, मनोरम परम सुख प्रकाश ॥ जय जलनिधि ॥
त्रिपुटा नीलमणि नीलजलदनिभपटल-
निन्दित रूपकान्ति उदारि आ।
आ आ विकच कमले कि निश्चल
मधुकर नेत्र युगल विशाल ॥ जय जलनिधि ॥
इति यतितालो गतः ॥

*अथ निःसारी तालः—*

स विरामद्रुतद्वन्द्वा निःसारौ तु लघुद्वयम् ॥ कक् लल ॥ ०० ॥

*अथ च हकारः —*

दिगि दिगि थेई त थेई त थेई ॥ थेई थो दिगि ता ॥

तता तता तत तता ॥

*अथोदाहरणम्—*

दंष्ट्राधृत दुर्द्धरधरणे। भव-जलधि तरणे तरणे॥

*अथ स्वरकरणम्—*

सा सा रि सा रि सा रि ग नि सा रि।

सा रि ग म रि ग म ग ध नि ग म प ध सा॥

ठेङ्गण ङ्गण ङ्गणङ्ग-था ङ्गण ङ्गण ङ्गण ङ्गण ङ्गण ङ्गणङ्गथा रि।

खेरटा खेरटा खेरटा खेरटा थारि। नाडिडिङ्क ताड़िड़िङ्क-

डिडिङ्क तत थोई ङ्कट थोया धो दिं ताः॥

इति निःसारि तालोगतः॥

*अथ मभृकः—*

सगणा लघवः शब्दाश्चत्वारो मश्टके पुनः॥

अस्याक्षरगणं—ल ल ग ल ल ल ल॥

अस्य कला— ऽऽ — — — — ॥

*अथ च हकारः —*

थेई आं दिगि दिगि थेईत थेईता ततत ता त ता॥

अस्योदाहरणं—जय कंसासुर नृशंस, कर-सरसिज-कलित-वंश॥

पाटाः —ता ता ता झेंक्रिणा ता ता ता झेंक्रिणा झें झें क्रिणा-

झेंक्रिणा॥ ता द्रिमिकट था द्रिमिकट ता धिकट ता धिना॥

*अथ झम्पकः—*

स विराम द्रुतद्वन्द्वाल्लघुना झम्पको मतः।

अस्याक्षरगणं—क् क् ल् ॥ अथ कला— ॥०० ॥

*अथ च हकारः—*

थेई थेई तता तता थेई थेई ते थेई ता त्रताता तत ताता ॥

अस्योदाहरणम्—लक्ष्मीश चक्रधर । मां पाहि विबुधवर ॥

*अथ स्वरकरणम्—*

सा सा रि सा प नि सा रि सा रि ग म प सा सा ।

सा नि ध प म प ग रि सा रि ग प म प सा सा ॥

झें द्रिमिकिता द्रिमिकिताक द्रिमिकि ता ता ॥

ताकझें-काकुनाकझें का कु ताक धिक ट धा धा ॥

तेन्ना तेन्ना तेना उतेना तेना तेन्ना ।

तेना तेनाउँ तेना तेनाउं तेना तेना तेना ॥

*अथ रूपकः—*

रूपके तु विरा मात्रं द्रुत-द्वयमुदाहृतम् ॥

अथाक्षरगणं—क् क् । अथ कला— ॥ ० ० ॥

*अथ च हकारः—*

दिगि दिगि थेईत थेईत थेई थेई ॥

दिगि दिगि ता तता क्र ता ता ॥

*अथोदाहरणम् ॥ गीतम्—*

जय सुर मुनि, नरक्षः लीला धृत गोपवेश ॥

*अथ स्वरकरणम्—*

सा सा मा मा ङ्ग म सा सा ।

स नि ध नि प ध प म सा सा ।

सा नि ध न्नि नि थ नि न्नि । र धि न न रि रि सा ।

ता द्रिमिकट थों द्रिमिकट ता द्रिमिकट ता ।

ताकझें काकुनाकझें काकुताक धिकट धा धा ॥

60

*अथ त्रिपुटः—*

द्रुतत्रयं विरामात्रं त्रिपुटे परिकीर्त्तनम्।

अथाक्षरगणं—क् क् क्। अथ कला— ॥ ००० ॥

*अथ हकारः—*

थेई तता ततथेई त्त थेइ थेई ता त्तता तत तता तता ॥

अस्योदाहरणम्—कमललोचन दुरितमोचन ॥ इति

*अथ स्वर करणम्—*

सा सा सा रि ग म रि ग म सा रि ग म साः।

सा सा सा रि ग म रि ग म सा रि ग म साः ॥

सा सा रि ग म रि म म सा ॥

ठेणाङ्कु णाङ्कु णाङ्कु ठेणा णाङ्कु णाङ्कु णाङ्कु णाङ्कु

ता ता ओ धि कट झेंक्रिणा ॥

*अथाड्डुतालः —*

लघो द्रुत द्वयेन स्याच्छङ्कुः शृङ्गार-वीरयोः ॥

अथाक्षरगणम्—ल् ल् क्। अथ कला ॥ ० ० ॥

*अथ च हकारः—*

थेई ताता ता थेई। थेई थेई ताकट द्रा ना द्रा ता ॥

*अथोदाहरणम् ॥ गीतम्—*

मुरहरो हरतु ते दुरित-रामापदम् ॥

*अथ स्वरकरणम्—*

सा सा सा सा सारिगम सारिसारिगम ॥

रिगम पध गम गम पध। सा न्नि न्नि सनिधप सा सा ॥

रि ग मा ङ्गा गा ॥

रि ग प ध प ध नि। ध ग मा रि ग मा ङ्गा सा न्नि न्नि ॥

*अथैकताली—*

द्रुते नैकेनैकताली·········· ।
एकाताली ततः पूर्वमाला पगा ...... दैवमूलम् ॥

अथाक्षरगणम् — क् ॥

*अथ च हकारः—*

दिगि दिगि ते थेई थेई क ताक थेई ।

ताथेई थो ता दिगि तिन्दाउं ति ताकट धौ दिगता ता ।

*अथोदाहरणम् ॥ गीतम्—*

गोपानन्दित सुरमुनिवन्दित ॥

*अथ स्वरकरणम्—*

सा सा रि सा सारि सारि सारि गम सा सा ।

सा नि ध प म प ग रि ध रि प रि सा सा ॥

दिदि थे निगि दिगिथों दिगि दिगि दिगि दिगि दिगि

दिगि दिगि दिगि दिगि दिगि दिगि दिगि थों ।

तेनाउँ तेनाउँ तेना तेना ईया ॥

अथ मानम्—सा सा सा रिग म रि गम ग ग मपध ॥ ०

*अथ कुड्कतालः—*

द्रुताभ्यां परतो ह्रस्वौ कुड्क्यकः परिकीर्त्तितः ॥

अथाक्षरगणम्—क् क् ल् ल् ॥ अथ कला— ॥ ०० ॥

*अथ च हकारः—*

थेईक ताकट ताता थेई ।

तथेइ थो दिगि ताता ताता ताता ताता ताता ॥

*अथोदाहरणम्—*

जय जनरञ्जन दनुसुत-भञ्जन सुरवर पालन फणिपति गञ्जन ।

*अथ स्वरकरणम्—*

सा सा सा रि ग म रि ग म प ग म प ध ।

म ग ध नि नि ध ग नि म ग ग रि सा ॥

ते ते ते ते ते ते थेई। ता दिगि ते ते ते थेई ता दिगि ते ते-
ते ते थेई॥ ते दिगि थेई। ते दिगि थेई ते दिगि॥
ते गते ताते दिगि ताता॥

*अथ कलाबहुलान् शशिप्रियादिचतुस्तालानाह—*

गत्रयं गत्रयं लश्च तालेस्यात्तुशशिप्रिये॥

अथाक्षरगणं—ग ग ग प प प ल। अथ कला—ऽऽऽऽ।॥

*अथोदाहरणम्॥ गीतम्—*

श्याम अङ्ग अति शुभङ्ग श्रीमुख सुरेख भङ्गिमा।
नागनरसुरमण्डले आर नाहिँ नाहिँ उपमा॥
परंब्रह्म ये आ॥ आ आ आ आ ये आ ये आ येआ येया।
त्रिय ईयारे॥

*अथ नलकूवरः—*

मगौ गौ गौ नलौ चैवं ताले स्यान्नलकूवरे॥

अथाक्षरगणम्—गगगग पपपप ललल। अथ कला—ऽऽऽऽ५५५५

*अथोदाहरणम्—*

श्यामलतन पीतवसन शोभाकृत मदनकदन।
नखरुचिजित इन्दु, भाले घृसृण विन्दु, भाले घृसृणविन्दु।
मौलि वकुलमाल। उरें वनि वनमाल।
भजेहुं रे सखि नन्दलाल॥

*अथ वाद्यकाकुलः—*

प्लुतौ नयौ मभौ चैव द्रुतौ च लघुरेककः।
निःशब्दं ल चतुष्कं च ताले स्याद्वाद्यकाकुले॥

अथाक्षरगणम्—पप लल लल गगग गगग लल क् क् ल अ
शब्द लल लल॥

अथ कला—॥ उँउँ ।॥ ऽऽऽऽऽऽ॥०० ॥

*अथोदाहरणम् ॥ गीतम्—*

जय शितकर दहन मिहिर नयनु आ।
सुविमल शशिखण्ड शिरसि जटिल मुकुटधर शु आ।
दलिताञ्जन द्युतिगञ्जन गले रञ्जन गरलु आ॥

*अथ सिंहनन्दन:—*

पौल पौल गुरुद्वौ च गौल पौल पगा लघू।
निःशब्दं ल चतुष्कं च ताले स्यात्सिंहनन्दने॥

अस्याक्षरगणम्—गग लग लग कक गग लग लग गलल
अशब्द ललल॥

**अथ कला**—SSll$\mathfrak{s}$ ll S oo SS l$\mathfrak{s}$l$\mathfrak{s}$lS l≡

*अथोदाहरणम् ॥ गीतम् ॥ भैरव—*

पल्लव घन घटित शयन, विनिहित तनुयष्टिका।
बासरान्त गगने कान्तजिमुहि मकररेखिका॥
प्रबल मदन, निश्चल तन स्वेद-सलिल संचिता।
शशधरमणि घटितरमणि जिमु शशिकरचुम्बिता॥०॥

इति चतुर्दश ताला गृहीताः॥

प्रयोज्या वापि ये ताला नोक्ता विस्तरशंकया।
तेषां जिज्ञासुभिर्द्दश्या संगीतार्णव-चन्द्रिका॥

चक्रे नृपो यां भुवि केरलायां श्रीनीलकण्ठोऽपि च नाट्यपूर्वाम्।
मनोरमाख्यां तु गतस्तृतीयः पादस्तु तस्यां बुधशर्मदाख्याम्॥

---

## चतुर्थः पादः

*अथ क्षुद्रगीत लक्षणमाह—*

अथातः क्षुद्रगीतानां लक्षणं प्रतिपद्यते ।
आद्या चित्रपदा चित्रकला ध्रुवपदा तथा ॥
पाञ्चालीति समाख्याता गीताश्चैव चतुर्विधः ॥ १

*केवलक्षुद्रगीतमाह—*

तालधातुयुं वाक्यमात्रं क्षुद्रमितीर्यते ।
क्षुद्रगीतादावन्त्याऽनुप्रासो निवेशनीय इति विशेषज्ञा वदन्ति ॥

*अन्त्यानुप्रासो यथा—*

व्यञ्जनं चेद्यथावस्थं पूर्वस्वर-समन्वितम् ।
आवर्ततेऽन्त्ययोज्यत्वादन्त्यानुप्रास उच्यते ॥ २

इतिक्षुद्रगीत लक्षणम् ॥

*अथ चित्तपदागीत लक्षणमाह—*

केवलं पद मात्रेण वैचित्र्यं यदि दृश्यते ।
न धात्वादौ विचित्रत्वं ज्ञेया चित्तपदेति सा ॥ ३

*उदाहरणम्—गुण्डकेरि रागेण—*

कलयति नयनं दिशिदिशि वलितम् । पङ्कज मिव मृदुमारुतचलितम् ॥
केलिसदने प्रविशति राधा । प्रतिपद समुदित मनसिजवाधा ॥
ध्रुवः ॥
जनयतु रुद्रगजे समुदितम् । रामानन्दराय कवि गदितम् ॥

*अथ चित्तकला गीतलक्षण माह—*

उद्ग्राहाध्रुवमात्रा स्या द्ध्रुवे तु नूनमात्रिका ।
उद्ग्राहे वहुधा भोजे मातुश्चित्र कला मता ॥ ४

*अथ चित्रकला भेदमाह—*

द्विपदी त्रिपदी चैव चतुः पञ्चपदी तथा।
षट्पदी चेत्यसौ चित्रकला बहुविधा भवेत्॥ ५

*उदाहरणं श्री गीतगोविन्दे गुर्जरी रागेण—*

हरिरभिसरति बहति मधुपवने॥ किमपरमधिक सुखं सखि भवने।
माधवे मा कुरु मानिनि सा निमये ॥ ध्रु वः ॥ इत्याद्यनन्तरम्॥
श्री जयदेव कवेरिदमुदितम्। सुखयतु सुजनजनं हरिचरितम्॥
आभोगः॥

*अथ ध्रुवपदागीतलक्षणमाह—*

ध्रुवं गीत्वा भिन्नधातुर्यताभोगस्तु गीयते।
उक्तयोर्लक्षणयुता सैका ध्रुवपदा मता॥ ६

*मारवीरागेण रूपकतालेनोदाहरणम्—*

सुजनवद मुररिपु नाम। दुष्कृतमपहाय याहि दुर्लभहरिधाम।
ध्रुवेति। पुत्रमित्र बान्धवगणमिह न कलय सत्यम्॥
पुरुषोत्तममिश्र गदितमनुभावय नित्यम्॥ इत्याभोगः॥

*अथ पाञ्चाली गीतलक्षण माह—*

अति विस्तीर्ण पदता पञ्चप्रोक्ता मनीषिभिः।
स यत्रास्तीति संप्रोक्ता पाञ्चालीभरतादिभिः॥ ७

*एतस्या लक्षणं मतान्तरे तु अन्यत् किमप्यस्ति—*

पाञ्चाली बहुभिः पादैर्द्विधा सा सध्रुवाऽध्रुवा॥

*उदाहरणं तु संगीतसारे—*

कृष्ण विजयवान् रचितजङ्क गीतादि।
अस्या एव गौड़े पाञ्चालीति प्रसिद्धिः॥
एवं भागान्तरे ज्ञेयं गीतं गीतविशारदैः।
अस्या मन्योऽन्यसाङ्कर्याद्भेदा बहुतरा मताः॥

मया तु ग्रन्थ-बाहुल्य-भीत्या ते नेह वर्णिताः ।
श्रद्धालवो ये पठन्तु संगीतार्णवचन्द्रिकाम् ॥ ९

*अथ गीतानां दिव्यमानुषादि भेदत्रयकथनम्—*

दिव्यं च मानुषं चैव गीतं स्याद्दिव्यमानुषम् ।
दिव्यं संस्कृत-संपन्नं मानुषं प्राकृतोत्थितम् ॥
संस्कृत-प्राकृतोत्थं च दिव्य-मानुषमुच्यते ॥ १०

*अथ मानुष गीतहेतु भाषामाह—*

अङ्ग बङ्ग कलिङ्गाद्या देशभाषादि हेतवः ।
येषु येषु च देशेषु या भाषा चैव दुर्ल्लभाः ॥ ११
अमृतत्त्वज्ञनालापादाहृत्य प्रतियोजयेत् ।
अपरेऽपि गीत विशेषाः सन्ति मया त
तेऽनतिप्रयोजनत्वादुपेक्षिताः ॥

*अथ गीतगुणा वक्ष्यन्ते—*

गुणा गीतस्य माधुर्य्य मौदार्यं पूर्णता तथा ।
व्यक्तिश्च रञ्जकत्वं च प्रसादश्चेति कीर्त्तिताः ॥ १२

*अथ ग्रहविषयमाह—*

तालो गीतगतेः साम्यकारी तस्य ग्रहाश्रयः ।
अनागत समातीत सञ्ज्ञाः सर्वत्र ते मताः ॥ १३

*तेषां ग्रहाणां मध्ये प्रथमतोऽनागत ग्रहमाह—*

गीतारम्भाद्यदा पूर्वं समुच्चार्याऽक्षरद्वयम् ।
तालस्य न्यसनादुक्त स्तदैवानागत-ग्रहः ॥ १४

*अत्रोदाहरण गीतमाह—*

जय जय कमला कुचचन्दनमण्डल वक्षस्थल दुर्जन खण्डन,
षण्ढासुर दण्डन पण्डित पुण्डरीक लोचन आ ॥

अत्र निःसारी ताले जय जयेत्यक्षरचतुष्टयं तालवाह्यमेव । कमले-यारभ्य तालः पठेदिति ॥

*अथ समग्रहमाह—*

गीतोच्चारणमात्रेण यदा तालोदयो भवेत् ।
तदा समग्रहः प्रोक्ता भरतादिमुनीश्वरैः ॥ १५

अत्रोदाहृतं मथुके—

*अथातीतग्रहमाह—*

कमला या पतिष्यन्ती पश्चात् सा प्रथमे यदि ।
विन्यस्य गीयते तालस्तदातीतग्रहः स्मृतः ॥ १६

उदाहरणं यथा गोपगोविन्दे—

शिशिर शीतल मंजुल वंजुल मृदु किशलय सङ्कुलम् ।
इत्यादि यतितालेन गीयते ॥

सर्वेष्वेवं हि तालेषु ग्रहस्त्रिविध इष्यते ॥

*अथ ग्रहाणां माहात्म्यमाह—*

न ज्ञात्वा ये ग्रहविधिं गीतं गायन्ति मानवाः ।
पापिनस्ते समाख्याता अतो ग्रहविधिं स्मरेत् ॥ १७

समातीतानागताश्च ग्रहाः शान्तिवरप्रदाः ।
गायकानां हितकराः सर्वमङ्गलदायिनः ॥ १८

*अथ लयलक्षणमाह—*

गीतवाद्यपदन्यासः क्रियाणां समतामिथः ।
लय इत्युच्यते प्राज्ञैर्द्रुतोमध्यो विलम्बितः ॥ १९

*अथ द्रुतादिलयत्रयाणां पात्र-निर्णयमाह—*

लयस्तु प्रथमो नीच पात्राणां स्याद्द्रुतस्तथा ।
मध्यमानां तु मध्यः स्यादुत्तमानां विलम्बितः ॥ २०

*अथ द्रुतादिलयत्रयाणां मात्रान्यूनाधिकप्रमाणमाह—*

एकमात्रो द्रुतो मध्ये विश्रान्तिर्द्विगुणा वृता ।
विलम्बितस्तद्द्विगुणः सर्वेऽमी सर्वतालगाः ॥ २१

*अथ यति लक्षणमाह—*

लय प्रवृत्तिनियमो यतिरित्यभिधीयते ।
समा श्रोतोवहा गोपुच्छिका चेति त्रिधा मता ॥ २३

*अथ समा यतिमाह—*

आदिमध्यावसानेषुलयैकत्वे समा मता ।

*अथ श्रोतोवहा यतिमाह—*

आदिमध्यावसानेषु क्रमेण यदि गीयते ।
चिर-मध्य-द्रुतलया तदा श्रोतोवहा मता ॥ २३

*अथ गोपुच्छिका यतिमाह—*

लयैर्गोपुच्छिका प्रोक्ता द्रुतमध्यविलम्बितैः ॥ २४

*अथ मान लक्षणमाह—*

विश्रान्तकारिणी कालक्रियामानमिहोच्यते ।
ताल विश्रामकारित्वान्मानं ताल समाप्तिकृत् ॥ २५

विशेषस्तु 'सङ्गीतार्णवचन्द्रिकायां' विज्ञातव्यः ॥

*अथ धातोः पुनरुक्तां नवनवत्वं चाह—*

गीतावयवस्य पुनः पुनर्गानं पुनरुक्तता । नव नवत्वं च बारं वारं गीयमानमपि रञ्जकातिरेकेण नव नव प्रतीयमानत्वम् ॥

*अथ रागरम्यत्व लक्षणमाह—*

कर्णप्रियं यतिस्थं स्याद्भङ्गियुक्तं सुखावहम् ।
मन्द्र मध्यम ताराढ्यं रागरम्यत्वमीरितम् ॥ २६

*अथ गमकोत्पत्तिस्थानमाह—*

नाभिस्थानाभिसम्भूता मेदस्था मेदसम्भवा ।
हृदिजा हृदयस्था च कण्ठस्था कण्ठसम्भवा ॥ २७

चिबुकस्था चिबुकजा मुखस्था मुखसम्भवा।
शिरस्था शिरसो जाता गमकोत्पत्तिरुच्यते ॥ २८

अन्यत् सर्वं सुबोधम्।

*अथ गमकस्वरूपमाह—*

संश्रुतिस्थानसम्पन्नछायां शत्यन्तराश्रयाम्।
स्वरो यो मूर्च्छनामेति गमकः स इहोच्यते ॥ २९

अपरः पक्षोऽस्ति—

स्वरस्य कम्पो गमकः श्रोतृचित्त-सुखावहः।
इति केचिद्वदन्ति।

*अथ गमकः कतिविधो भवति तदाह—*

तस्य प्रभेदास्तिरिताः,......कम्पितस्तथा।
लीन आन्दोलित वलि त्रिभिन्न कुरना हता ॥ ३०
उन्नामितः प्लावितश्च हूंकृतो मुद्रित स्तथा।
नामितो मिश्रितः पञ्चदशेति परिकीर्त्तिताः ॥ ३१

एतत्पञ्चदशगमकानां लक्षणं ग्रन्थवाहुल्यभीत्या मया न लिखितम्। जिज्ञासाचेत्तर्हि सङ्गीतार्णवचन्द्रिकाया मन्वेषणीयम्॥

*अथ गमकाभ्यास प्रकारमाह—*

माघपौषनिशायान्तु शेषप्रहरमात्रके।
स्थित्वोदके पञ्चदश गमकान् साधकोऽभ्यसेत् ॥ ३२

*अथ नैर्मल्यमाह—*

उच्चारणेन वाद्यस्य सम्यक् प्रकटनं यतः।
सुखता दोष रसयुक् चान्य नैर्मल्यमेव तत् ॥ ३३

*अथ गीताङ्गहीनदोषानाह—*

तालहीने कायरोगो धातुहीने धनक्षयः।
धातु मातु पदं यत्र नास्ति तद् गीतकं रिपुः ॥ ३५

*अथ सामान्यतः संस्कृत प्राकृत गीतदोषमाह—*

गीतेषु दोषः स्खलना-दिबास्यतालाद्यभावेन निवन्धनं च ।
स्याद्धातुमात्वादिहतिः कटूक्तिः रसादिहानिः श्रवणाप्रियत्वम् ॥ ३६

इत्यादि दोषाः गीतेषु वहवो यदि सन्त्यपि ।
नोक्तास्ते ते ग्रहस्तेषां ज्ञाने तत्तद्विलोक्यताम् ॥ ३७

*अथ केवल भाषागीतविषयमाह—*

गीते दीर्घो भवेद्ध्रस्वो ह्रस्वो दीर्घः क्वचिद्भवेत् ।
एकत्वे च क्वचिद्द्वित्वं द्वित्वे चैकत्वमेव च ॥
श्लिष्टे विश्लिष्टता क्वापि क्वचिद्रेफस्य वैकृतम् ।
क्वचित् कोमलता गाढ़े गाढ़ता कोमले क्वचित् ॥
शीघ्रोच्चारे च वर्णानां तथा चैव प्रसारणे ।
लिङ्गान्यत्वे विसन्धौ च संयुक्ताक्षरमोक्षणे ॥
असंयुक्तोऽपि संयोगो ह्रस्वदीर्घ - व्यतिक्रमे ।
पौनरुक्त्यं न भाषाढ्ये गीते दोषोऽभिजायते ॥ ४०

*अथ संस्कृत गीति-विषयमाह—*

भवन्त्येते च दोषाय गीते चैव तु संस्कृते ।

यद्यपि श्रुतिकटूवादयो दोषाः सन्ति, तथापि आर्द्रवणिजो वहित्रस्यानुसन्धानेन किं प्रयोजनमिति नोक्ताः । जिज्ञासा चेत्तर्हि साहित्यदर्पणादावन्वेषणीयाः ॥

*अथ गायकदोषमाह—*

भीतोऽव्यक्तपदःशिरो विचलितः फूत्कारको विस्वरः ।
स्यात्संदष्टरदो निमीलनयनो ग्रामाव्यवस्थ स्तथा ॥
गायन् वक्रगलः स्वरालपबहुलः स्याद्रागसंमिश्रलः ।
कम्पाङ्गोऽनवधानयुक् विरसवान् काकस्वरः सत्वरः ॥ ४१
सन्त्येवं वहवो दोषा नोक्ता विस्तर - शङ्कया ।
दृष्ट्वा वुधैस्तु ते ज्ञेयाः संगीतार्णवचन्द्रिकाम् ॥ ४२

*अथ गायकभेदत्रयमाह—*

गायकास्त्रिविधाः प्रोक्ता उत्तमाधममध्यमाः ।

*पुनर्गायकस्य पञ्चविधभेदमाह—*

शिक्षाकारोऽनुकारश्च रसिको रञ्जकस्तथा ।
भावकश्चेति गीतज्ञाः पञ्चधा गायकं जगुः ॥ ४३

एषां तु लक्षणं नोक्तं मया बाहुल्यभीतितः ।
जिज्ञासवस्तु पशन्तु संगीतार्णवचन्द्रिकाम् ॥ ४४

*अथ गायकस्य एकलादि भेदत्रयकथनम्—*

एकलो यमलो वृन्दो गायकश्चेति स त्रिधा ।
एक एव तु यो गायेदसावेकल - गायकः ।
स द्वितीयस्तु यमलः सवृन्दो वृन्दगायकः ॥ ४५

एतेषां लक्षणमल्पत्वात्सुबोधत्वान्नलिखितम् ॥

*अथ गायनीलक्षणमाह—*

रूपयौवनशालिन्यो गायिन्यो गीतविज्ञकाः ।
माधुर्य धूर्य - ध्वनय श्चतुरा श्चतुर-प्रियाः ॥ ४६

*अथ वाग्गेयकार लक्षणमाह—*

वाचं गेयं च कुरुते यः स वाग्गेयकारकः ।

*स वाग्गेयकारकः कतिविध भेदो भवति तदाह—*

स च श्रेष्ठो मध्यमश्चाधमोऽपि त्रिविधःस्मृतः ॥ ४७

*अथैषां लक्षणमाह—*

यः कोषादिषु सर्वत्र सावधान स उत्तमः ।
प्रबन्धकरणासक्तो मध्यमो धातुमातुकृत् ।
परधातो धातुकर्त्ता कुटिलालाप-सञ्जुतः ॥ ४८

धातु अन्यकृतेष्वेव मन्यधातु प्रबोधकः ।
विशेष लक्षणं तु सङ्गीतार्णवचन्द्रिकायां विज्ञातव्यम् ॥

चक्रे नृपो यां भुविकेरलायां श्रीनीलकण्ठोऽपि च नाट्यपूर्वाम् ।
मनोरमाख्यां तु गत श्चतुर्थः पादस्तु तस्यां बुधशर्मदात्र्याम् ॥ ४९

# अथ पञ्चमः पादः

*अथ वाद्यमाहात्म्यमाह—*

न वाद्येन विना यस्माद्गीतं तालं च शोभते ।
तस्मान्माङ्गल्यमस्माभिर्वाद्यमत्र निगद्यते ॥ १

*अथ वाद्यफलमाह—*

वाद्यं दत्वा तथा विप्राः शक्रलोकमवाप्नुयात् ।
स्वयं वाद्येन संपूज्य तस्यैवानुचरो भवेत् ॥ २

*अथ कति वाद्यभेदस्तदाह—*

ततं शुषिरमानद्धं घनमित्थं चतुर्विधम् ॥

*अथ चतुर्विधमाह—*

ततं वीणादिकं वाद्यं वंश्यादि शुषिरं तथा ।
आनद्धं मुरजाद्यं स्याद्घनं तालादिकं मतम् ॥ ३

*अथ ततादावाद्यभेदानाह—*

अलावणी ब्रह्मवीणा किन्नरी लघुकिन्नरी ।
विपञ्ची वल्लकी ज्येष्ठा चिता घोषवती जया ॥
हस्तिका कुब्जिका कूर्मा सारङ्गी परिवादिनी ॥ ४
त्रिसरी शार्ङ्गतन्त्री च नकुलौष्ठ्या चतुःसरी ।
औदुम्बरी पिनाकी च निबद्धः पुष्कल स्तथा ॥ ५
गदावारणहस्तश्च रुद्रोऽथ स्वरमण्डलः ।
कपिलासो मधुस्यन्दी घोषेत्यादि ततं भवेत् ॥ ६
सिद्धैषां घटना लोके पारंपर्योपदेशतः ।
तथापि बक्षेऽहं रुद्र-वीणायाश्चापि लक्षणम् ॥ ७

दण्डोऽस्या रुद्रवीणाया मुष्टयेकादशसम्मितः।
भूमदङ्गुष्ठाग्रमितं शुषिरं तस्य कीर्त्तितम् ॥ ८
दण्डस्योभयतो देयं कांस्य-सम्बरकद्वयम्।
पश्चात्संवरकं चात्र छत्रीकृतशिरो भवेत् ॥ ६
दण्डस्य वेष्टनं सार्द्धं पञ्चाङ्गुलमिहोदितम्।
तन्मितान खरी तस्याः कर्त्तव्या सुन्दराकृतिः ॥ १०
ककुभो रुद्रवीणाया स्त्रिशिराः परिकीर्त्तितः।
उद्र्ध्वे शिरसि दातव्या लौहपत्री समन्विता ॥ ११
मूलतन्त्री तदुपरि न स्याल्लौहीं ततः परम्।
दक्षिणे शिरसिन्यस्याच्छ्रित्रि तन्त्रीद्वयं क्रमात् ॥ १२
एवं तु ककुभं तत्र वीणादण्डे निवेशयेत्।
अंगुलोच्चं तूद्र्ध्वशिरोऽङ्गुष्ठमात्रं तु पार्श्वकम् ॥ १३
सप्ताङ्गुलान्तरं तस्मात्तस्युमुख्यं निवेशयेत्।
अन्यं तत श्चतुस्त्रिंशदङ्गुलान्तरमाक्षिपेत् ॥ १४
अष्टादशाङ्गुलमुखं चक्रत्वे चारुगर्भकम्।
सुकुम्भमुन्नतं कान्तं वर्त्तुलं तुम्बुयुग्मकम् ॥ १५
औन्नत्यं किंचिदाधिक्य मनयोश्च प्रशस्यते।
अर्द्धाङ्गुलान्तरं पश्चात्तुम्बुं च स्थापयेद्बुधः ॥ १६
दण्डपृष्ठे रन्ध्रयुतेऽस्याः सरस्वतिकां पुनः।
सम्बरद्वयङ्गुलोच्चां तां छत्राकृति शिरोयुताम् ॥ १७
ततः सार्द्ध द्यङ्गुलान्ते चैकां मोटनिकां न्यसेत्।
पञ्चाङ्गुलान्तरं तस्यामग्रे वेष्टि विलान्विताम् ॥ १८
पूर्वमोटनिकावेष्ट - रन्ध्रमेकं समं ततः।
लोहाङ्कुशं तु कर्त्तव्यं वर्त्तुलं वड़िशाकृति ॥ १६
तद्बन्धनगुणं तस्मिन् वेष्टरन्ध्रे निवेशयेत्।
तत्परायां तु मोटन्यां वेष्टरन्ध्रेऽङ्कुशं क्षिपेत् ॥ २०

तन्मोटनी वृत्तरन्ध्र - सदृशं दण्डरन्ध्रकम्।
सुयन्त्रिते तु तत्रैव बध्नीयान्मुख्यतन्त्रिकम्॥ २१
तद्वच्च भ्रामयेत्पूर्वां मोटनीं च शनैः शनैः।
न यावदेति स्वस्थानं तन्त्री यन्त्र-विशारदः॥ २२
अस्यास्त्वष्टादश प्रोक्ताः सारिकाः पूर्वसूरिभिः।
तासां वृहत्तरा चाष्टौ दश क्षुद्रा प्रकीर्त्तिताः॥ २३
एतास्तु तारवादिन्यस्तिष्ठन्ति गदिकोपरि।
वितस्ति मात्रीगदिकाङ्गुष्ठोऽत्रास्यास्तुगर्भकः॥ २४
तावच्छून्यस्तु कर्त्तव्यो यथादण्डे स्थिरा भवेत्।
मदनस्य च सिक्थस्य योगेन सुदृढ़ीकृताः॥ २५
वृहतीनाञ्च सारीणां खननीय-तलं क्रमात्।
एतास्तु सर्वावयवैः कथितास्त्र्यङ्गुला बुधैः॥ २६
स्थाप्या दण्डस्य ताः पृष्ठे यथा रागस्वरं पुनः।
मदनस्य च सिक्थस्य योगेन सुदृढ़ीकृताः॥ २७
सर्वासां लोहकलिकामस्तके स्युः सुयन्त्रिताः।
एकाङ्गुलोच्चाः क्षुद्राः स्युरिति सारी विनिर्णयः॥ २८
एवं विनिर्मिता रुद्र-वीणा जन-मनोहरा।
अस्याः शिक्षास्तु कर्त्तव्या दाक्षिणात्योपदेशतः॥ २९

इति रूद्रवीणा॥

अन्येषां ततवाद्यानां ग्रन्थविस्तरभयाल्लक्षणं नोक्तम्। विविदिषा चेत्तर्हि संगितार्णवचन्द्रिकायां विज्ञातव्यम्॥

*अथ ततवाद्यफलमाह—*

वाद्यानामपि देवस्य तन्त्रीवाद्यं सदाप्रियम्।
तेन संपूज्य वरदं गाणपत्य-सवाप्नुयात्॥ ३०

*अथ ततवाद्यमध्येवीणायां मोक्षसाधनत्वमाह—*

वीणावादनतत्वं च श्रुति-जाति विशारदः।
तालस्यापि च घातेन मोक्षमार्गं प्रयच्छति॥ ३१

*अथ शुषिरवाद्यानाह—*

वंशोऽथ पारी मधुरी तित्तिरी शङ्ख काहालाः ।
डोड़ही मुरली वृक्का शृङ्गका स्वरनाभयः ॥ ३२
शृङ्खला पिकवंशश्च चर्मवंश स्तथापरे ।
एते शुषिर-भेदास्तु कथिताः पूर्वसूरिभिः ॥ ३३

*अथ शुषिरवाद्यानां मध्ये विष्णोर्वल्लभतया अग्रगणितत्त्वेन वंशमेवाह—*

वर्त्तुलः सरलश्चैव पर्वजोऽग्रन्थिकस्तथा ।
वैणवः खादिरो वापि रक्तचन्दनजोऽथवा ॥ ३४
श्रीखण्डजोऽथ सौवर्णो दन्तिदन्तमयोऽपिवा ।
राजतस्ताम्रजोवापि लोहजः स्फाटिकोऽथवा ॥ ३५
कनिष्ठाङ्गुलितुल्येन गर्भरन्ध्रेण शोधितः ।
शिल्पविद्याप्रवीणेन वंशः कार्यो मनोहरः ॥ ३६
तत्र त्यक्त्वा शिरोदेशादधो द्विमितमङ्गुलम् ।
फुत्कार-रन्ध्रं कुर्वीत मितमङ्गुलपर्वणा ॥ ३७
पञ्चांगुलानि संत्यज्य ताररन्ध्राणि कारयेत् ॥ ४१।३८

*अथ मुरली—*

हस्तद्वयमिताया-मा-मुखरन्ध्र समन्विता ।
चतुःस्वरच्छिद्रयुक्ता मुरली चारुनादिनी ॥ ४२॥३९

*अथ वंशी—*

अर्द्धाङ्गुलान्तरोन्मानं तारादिविवराष्टकम् ।
ततोऽङ्गुलान्तरे यत्र मुखरन्ध्रं तथाङ्गुलम् ।
शिरो वेदाङ्गुलं पुच्छं त्र्यगुलं स्यात्तु वंशिका ॥ ४३॥४०

इतरेषां शुषिरवाद्यभेदानां लक्षणं ग्रन्थविस्तरभयान्नोक्तम् ॥
तेषां लक्षणं तु 'संगीतार्णवचन्द्रिकाया'मस्ति ॥

*अथ फुत्कृतः गुणाः कथ्यन्ते—*

नैविड्यं प्रौढ़ता चापि सुस्वरत्वं च शीघ्रता ।
माधुर्य्यमिति पञ्चामी फुत्कृतेषु गुणाः स्मृताः ॥ ४४।४१

*अथ फुत्कृतदोषा उच्यन्ते—*

शीत्कारबहुलः स्तब्धो विस्वरः स्फुटितो लघुः ।
अमाधुर्यं च विज्ञेयाः षड़ेषाः फुत्कृते क्रमात् ॥ ४५।४२

*अथ वांशिक गुणानाह—*

प्रयुक्ति रर्द्ध युक्तिश्च युक्तिश्चेत्यंगुले गुणाः ।
सुस्थानत्वं　सुस्वरत्वमंगुलीसारणक्रिया ॥
समस्त गमक - ज्ञानं रागरागाङ्ग - वेदिता ।
क्रिया भाषा विभाषासु दक्षता गीतवादने ॥
सुस्थाने चापि दुःस्थाने नादनिर्माण-कौशलम् ।
गातृणां स्थान-दातृत्वं तद्दोषा वादने तथा ।
वांशिकस्यगुणा एते मया संक्षिप्य दर्शिताः ॥ ४८

*अथ वांशिक दोषमाह—*

वहुकृत्यः शिरःकम्पः स्वस्थानाप्राप्तिरेव च ।
वृथा प्रयोग - वाहुल्यमप्लता गीतवादने ।
एभिर्दोषै र्युतोऽतीव निन्दितो वांशिको मतः ॥ ५०
वांशिकस्यापि दोषस्तु मया संक्षिप्य दर्शितः ।
विशेषतो जिज्ञासाचेत्तर्हि संगीतार्णवचन्द्रिकायामन्वेषणीयः ॥

*अथ आनद्धवाद्यानाह—*

मर्दलो मुरज श्चैव ढ़क्का पटह चाङ्कवः ।
पटवः कुण्डली भेरी घटवाद्यं च झर्झरः ॥
ड़मरु ष्टुमुकिर्मन्थो हुडुक्को मडुड़िण्डिमौ ।
उपाङ्ग　दर्दु रावित्यादिकमानद्धमीरितम् ॥ ५२



77

*अथ मर्द्दलोपयोगित्वादतन्नवाङ्गः गृह्यते—*

रागोमेलापकोजादि श्चचकार श्चपाटकः।
गतिश्चकतरोमान एतज्जानाति तालवित्॥
आनद्धे मर्दलःश्रेष्ठो यतस्तल्लक्षणं ब्रुवे।

*अथ मर्दलोपयोगीकाष्ठमाह—*

मर्दलः खादिरः श्रेष्ठो हीनस्यादन्यदारुजः।
रक्तचन्दनजो रम्यो गम्भीरध्वनिरुच्चकैः॥ ५३

*अथ मर्दलस्यदीर्घादि प्रमाणमाह—*

सार्द्ध हस्तप्रमाणं तु दैर्घमस्य विधीयते।
त्रयोर्दशाङ्गुलं वाममथवा द्वादशाङ्गुलम्॥
दक्षिणं च भवेद्धीन मेकेनार्द्धाङ्गुलेन वा।

*अथ मर्दलनिर्माणविधिमाह—*

करणानद्धवदनो मध्ये चैव पृथुर्भवेत्।
षण्मासीयो मृतोवत्सस्तच्चर्म करणं मतम्॥ ५५

एतद्गर्भस्थ विषयो न, जन्मावधिरित्यर्थः॥

*अथ मर्दलमुखदेय खरलि लेपमाह—*

विभूतिं गैरिकं भक्तं केन्दु केलव संयुतम्।
यद्वा चिपीटकं देयं जीवनीसत्व मिश्रितं।
सहमेकत्र - पिष्टं तल्लेपः खरलि रुच्यते॥ ५६
अयं खरलिलेपो मर्दलदक्षिणमुखे देयः।

*अथ मर्दल वाममुखंदेय पूरिकामाह—*

वामास्ये पूरिकालेपं वादनार्थं विचक्षणः।
परिकानाम-भक्तलाज चिपीटकनामन्यतमेन जलपिष्टं भस्म॥
ततः सूर्यातपे दत्वा शोषणानन्तरं तथा।
एवं द्वादशवारन्तु कुर्य्यालेपन शोषणे॥

१०६.

ततः प्रभात-समये श्रुतिः कार्या मनोहरा ।
चर्मतां द्विगुणी कृत्य रज्जु वा पट्टसूत्रजाम् ॥
वामे दक्षे मर्दलस्य सुदृढ़ं तु निवध्य च ।
वादकः स्कन्धमारोप्य वादयेद्धरिमानसः ॥ ५८

*अथ मर्दलस्य माहात्म्यमाह—*

मर्दलः प्रवरः प्रोक्तः सर्व वाद्योत्तमोत्तमः ।
अस्य संयोग मासाद्य सर्वं वाद्यं तु शोभते ॥ ५६
अन्ये च भरताद्युक्ता आनद्धा वाद्य भेदतः ।
सन्त्येवानर्थवाहुल्य भीत्या ते न मयोदिताः ।
जिज्ञासाचेत्तदा ज्ञेया संगीतार्णवचन्द्रिका ॥ ६०

*अथ घनवाद्यानाह—*

करतालः कांस्यवलो जयघण्टाथ शुक्तिदः ।
तालश्च पटवाद्यं च घण्टातोद्य च घर्घरम् ॥
झंझातालश्च मञ्जीरः कर्त्तार्यङ्कुर एव च ।
द्वादशैते मुनीन्द्रेण कथिता घनसञ्ज्ञकाः ॥ ६२

*तत्र घनवाद्यमध्ये तालनिर्माणमाह—*

त्रयोदश यवव्यासं वक्रपिण्डं यवोन्नतम् ।
यवपञ्चक-गम्भीरं मध्ये च यवसप्तकम् ॥
पृष्ठतो मध्यदेशेऽपि यवलिङ्ग-समाकृतिः ।
मध्ये गुञ्जासमं छिद्रं पट्टसूत्रादिगुम्फितम् ॥
काश्मीरादि समुद्भूतं तालमाहुर्मनीषिणः ॥ ६५
सुनादं दशतालं च ततो हीनं च वामकम् ।
कुर्यात्तत्र-द्वयं धार्यं तर्जन्यङ्गुष्ठ योगतः ॥ ६६
वामहस्तस्थ तालस्य मध्यमं षड्ज नामितम् ।
तिर्यक् दक्षिणतालस्य परिध्वंसेन ताड़येत् ॥
तालाङ्गै र्वादयेच्चैव प्लुतदीर्घ - लघुद्रुतैः ॥ ६७

नान्येषां घन-वाद्यानां लक्षणं गदितं मया ।
जिज्ञासा चेत्तदा ज्ञेया संगीतार्णव-चन्द्रिका ॥ ६८

*अथ ततादि वाद्यचतुष्टयोप्तत्तिहेतु माह—*

रुक्मिण्याः सत्यभामायाः कालिन्दी मित्रविन्दयोः ।
जाम्ववत्याः नाग्निजित्याः लक्ष्मणाभद्रयोरपि ॥
कृष्णस्याष्टमहिष्याश्च पुरावाह महोत्सवे ।
ततं शुषिरमानद्धं घनं च युगपज्जनाः ।
अवादयन्न संख्यात्र इति पौराणिकी कथा ॥ ७०

*अथ ततादि चतुर्विध-वाद्यानां मध्ये के केषां तदाह—*

ततं वाद्यं तु देवानां गन्धर्वाणां च शौषिरम् ।
आनद्धं राक्षसानाञ्च मानवानां घनं विदुः ॥
निजावतारे गोविन्दः सर्वमेवानयत् क्षितौ ।

*अथ सर्वजनरञ्जनतया नृत्यमाह—*

यो यस्य दयितोभावः स तं नाट्ये निरीक्ष्यते ।
अतः सर्वमनोहारी नाट्यं कस्य न रञ्जकम् ॥ ७२
तन्नाट्यनृत्यनुत्तानि शम्भोरग्रे प्रयुक्तवान् ।
ज्ञात्वा चतुर्मुख-मुखाङ्करतो हि मुनीश्वरः ॥ ७३

*तत्र नृत्यलक्षण माह—*

देशरीत्या प्रतीतो यस्ताल मान लयाश्रितः ।
सविलासाङ्ग - विक्षेपो नृत्यमित्युच्यते बुधैः ॥ ७४

विलासो यथा—

नायकालोकनादौ तु विशेषो हि क्रियासु यः ।
शृङ्गार-चेष्टासंहितो विलासः स निगद्यते ॥ ७५

*अथ नृत्यादौ गायनावश्यक कर्त्तव्यता माह—*

यो गीतव्यतिरेकेण कुर्यादभिनयं नरः ।
भ्रूणहा जायते तेन महानिरय मृच्छति ।
तस्मादादौ प्रयत्नेन कुर्याद्गीतविधिं सुधीः ॥ ७६

*अथ नृत्यस्य महिमानमाह—*

यो नृत्यति प्रहृष्टात्मा भावैर्वहु सुभक्तितः ।
सनिर्दहति पापानि मन्वन्तर-शतेष्वपि ॥ ७७

*पुराणान्तरेऽपि नृत्यस्य महिमानमाह—*

नृत्यतां श्रीपतेरग्रे तालिकावादनैर्भृशम् ।
उड्डीयन्ते शरीरस्थाः सर्वे पातक-पक्षिणः ॥ ७८

*अथ नृत्यस्य भेदद्वयमाह—*

ताण्डवं लास्यमित्येतन्नृत्य द्वेधा निगद्यते ।
पुं नृत्यं ताण्डवं नाम स्त्री नृत्यं लास्यमुच्यते ॥ ७९

*अथ ताण्डवस्यापि भेदद्वयमाह—*

प्रेरणी वहुरूपं च ताण्डवं द्विविधं मतम् ।

*तत्र प्रेरणी-लक्षणमाह—*

अङ्गविक्षेप वाहुल्यं तथाभिनय-शून्यता ।
यत्र सा प्रेरणी तस्याः संज्ञा ज्ञेया विचक्षणैः ॥ ८०

*अथ वहुरूप लक्षणमाह—*

छेदनं भेदनं यत्र बहुरूपामुखावली ।
ताण्डवं वहुरूपंतद्दारुणी गतमुद्धतम् ॥ ८१

*अथ लास्यमाह—*

लास्यं तु सुकुमाराङ्गं मकरध्वजवर्द्धनम् ।

*अथ लास्यस्यापि भेदद्वयमाह—*

स्फुरितं यौवतं चेति लास्यं द्विविधमुच्यते ॥ ८२

*अथ स्फुरित लक्षणमाह—*

यत्राद्येऽभिनये भावै रसै राश्लेष-चुम्बनैः ।
नायिका-नायकौ यत्र नृत्यतः स्फुरितं हि तत् ॥ ८३

*अथ यौवतलास्य लक्षणमाह—*

मथुरा-गोपलीलाभि र्नटीभिर्यत्र नृत्यते ।
वशीकरणं यत्रैव तल्लास्यं यौवतं मतम् ॥ ८४

*अथ नृत्यप्रवर्त्तनक्रममाह—*

गेयादुत्तिष्ठते वाद्यं वाद्याद्युत्तिष्ठते लयः ।
लयताल - समारब्धं ततो नृत्यं प्रवर्त्तते ॥ ८५

*अथ काष्ठीनृत्यमाह—*

अष्टाभि र्गोपनारीभिरष्टभिः कृष्णमूर्त्तिभिः ।
काष्ठीनृत्यं प्रभवति कृतस्वस्तिक-मण्डलिम् ॥ ८६

*अथ जाकड़ी नृत्यलक्षणमाह—*

पिछगुच्छकरैः पानमत्तौ गीत्वा स्वभाषया ।
तुरुष्कौ नृत्यते यत्र तं नृत्यं जाकड़ीति च ॥ ८७

*अथ शावरी नृत्यमाह—*

नृत्यन्ति शवरा यत्र गायन्तो निजभाषया ।
तदिदं शावरीनृत्यमित्याहु र्नृत्यकोविदाः ॥ ८८

*अथ कुरङ्गी नृत्यमाह—*

शावरीवेशयो र्गुञ्जापुञ्जभूषणयोः स्त्रियोः ।
नृत्यं कुरङ्गीतिविदु र्गायन्त्योश्च स्वभाषया ॥ ८९

*अथ मत्तावलीनृत्यमाह—*

मत्ता नाश्च तुरुष्काणा मपेयास्वादनान्तरम् ।
यः प्रकार स्तेननृत्यं विदु र्मत्तावलिं बुधाः । ९०
यस्मिन्देशे च या रीतिर्याच भाषा मनोहरा ।
तयापि नृत्यं भवति प्रभूणां चित्तरञ्जनम् ॥ ९१
विविधा यानिचान्यानि नाट्यभेदानि सन्ति च ।
तानि तानि प्रमाणानि मयानोक्तान्यतोऽधुना ।
येषां तु दृश्या जिज्ञासा संगीतार्णवचन्द्रिका ॥ ९२

नाट्यशाला निरूपणं तु वहुत्वान्मया न लिखितम् ॥
तत्तु संगीतार्णव चन्द्रिकायामस्ति । जिज्ञासुभिस्ततो ज्ञेयम् ॥
कोहलादुक्तमार्गेण शालानिर्माणमाचरेत् ॥

*अथ सभा निवेशन विधिमाह—*

सभायाः पूर्वदिग्भागे कारयेन्नृपमण्डपम् ।
सर्वोपकरणैर्युक्तो विशेत्तत्र महीपतिः ॥
पूरो भूपश्च विप्राश्च मण्डपस्य च दक्षिणे ।
अमात्या राजपुत्राश्च उत्तरां भित्तिमाश्रिताः ॥
पुरोभागे नरपते वैश्यास्युर्भित्तिमाश्रिताः ।
वन्दिनः कवयोऽत्रव कलानाट्यविदोऽपि च ॥
नाट्यधाम्नो वहिर्योधमुख्यास्तिष्ठन्ति शस्त्रिणः ।
राज्ञोऽङ्गरक्षा तैः कार्या याव न्नाटक-दर्शनम् ।
ततोत्सार्याः प्रयत्नेन अविज्ञाता च शस्त्रिणः ।
तथा म्लेच्छाः पामाराश्च तथा पाषण्ड-धर्मिणः ॥

*अथ सभासद्जनानां लक्षणमाह—*

राजाज्ञया सर्वएवोपविष्टाः स्युः सभासदः ।
मध्यस्थाः सावधानाश्च वाग्मिनो न्यायवर्त्तिनः ।
तृटिताऽतृटिताऽभिज्ञा असदादि निषेधकाः ॥
सानन्दा रसभावज्ञाः गुणिनः स्युः सभासदः ॥

*अथ सभागमनायोग्यजन कथनम्—*

रोगिभि र्वधिरैरन्धै र्नगन्तव्या सभास्थली ।

*अथ नृत्ये स्त्रिय एव प्रधानपात्रमिति दर्शयितुमाह—*

रसस्य च स्त्रियोमूल माद्यत्तयौवन-विभ्रमाः ।
तस्मान्नृत्येषु पात्राणि स्त्रियः कार्याः प्रयत्नतः ॥
यतः— पुंभिः प्रयुक्ताङ्गहारा न शोभन्ते कदाचन ।
सहजाऽन्यारोपितयोः सहजस्तु विशिष्यते ॥ १००

*अथ नर्त्तकीस्त्रीणां लक्षणमाह—*

नातिदीर्घो न खर्वा च सुपक्ष्माच सुलोचना ।
सर्वाङ्ग - सुभगा चारु - नितम्बजघनस्तना ॥

लयमान समायुक्ता यतितालग्रहोत्तमा ।
कन्या सुरभसा पुण्या नर्त्तकी समुदाहृता ॥ १०२
दशवर्षा भवेत्कन्या इति स्मृति वाक्यमप्यस्ति ॥

*अथ नृत्यायोग्य स्त्रीलक्षणमाह—*

अत्युच्चा वामना स्थूला कृशाङ्गी दन्तुरालसा ।
हीनस्तनी च पीताक्षी चाष्टौ ता नृत्यवर्जिताः ॥ १०३
एतल्लक्षण - विशेषस्तु वहुत्वादुपेक्षित्तः ।
ये तु जिज्ञासवस्ते पुनः संगीतार्णवचन्द्रिकायां जानन्तु ॥

*अथ जर्जर पूजाविधिमाह—*

पञ्चपर्वयुतो वंशो जर्जरः परिकीर्त्तितः ।
उद्र्ध्वपर्वणि शुक्लः स्यात्तदधो नीलवर्णकः ॥ १०४
ततः पीतस्ततो रक्तश्चित्रवर्णमतः परम् ।
सर्ववर्ण - पताकाभिः सर्वतः समलंकृतम् ॥ १०५
तत्र जर्जरवंशे गणपति दिक्पालादि पूजां कुर्यात् ।

*अथ जवनिका विधिमाह—*

कार्या जवनिका तत्र नीरन्ध्रा सूक्ष्मवाससा ।
धार्या सुरूपनारीभ्यां तत्तत् पात्र प्रवेशने ॥ १०६

*अथ जवनिका वस्त्रस्य शृङ्गारादिरसेषु वर्णभेदमाह—*

शुभ्रवर्णा च शृङ्गारे पीता वीरे प्रशस्यते ।
धूम्रवर्णा च करुणे कर्त्तव्या कपिशाद्भुते ॥ १०७
हास्ये विचित्रा कर्त्तव्या नीलवर्णा भयानके ।
वीभत्सके धूमला स्याद्रौद्रे रक्ता प्रशस्यते ।
अरुणो वापि सर्वस्मिन् कार्या जवनिका बुधैः ॥ १०८

*अथ नर्त्तकस्य नर्त्तक्यश्च मण्डनविधिमाह—*

सुनीलस्निग्ध विस्तीर्ण-केशपाश निवेशितः ।
ग्रन्थिर्विलुलितः पृष्ठे लसत् पुष्पावतंसकः ।
बेणी वा सरला दीर्घा मुक्ताजाल समन्विता ॥ १०६
कलितं कुन्तलै र्भाल-कस्तुरी चन्दनादिभिः ।
कस्तुरी चन्द्रकं भाले नेत्रे तु स्वञ्जनाश्चिते ॥ ११०

*अथ वेशान्तरमाह—*

उल्लसत् कान्ति वलये तालपत्रे च कर्णयोः ।
दन्तपंक्ति - प्रभाजाल - प्रज्ज्वलीकृत-रङ्गभूः ॥ १११
कस्तुरी पत्रभङ्गीभिः कपालौ कण्ठलम्बिता ।
तारा हारावली स्थूल–मौक्तिका स्तनमण्डना ॥ ११२
प्रकोष्ठौ न्यस्त-सद्रत्न–सौवर्ण-वलयान्वितौ ।
अंगुल्यो धृत माणिक्य नीलवज्रादि मुद्रिकाः ॥ ११३
चन्दनैर्धूसरं गात्रं यद्वा कुङ्कुम-रञ्जितम् ।
क्षीरोदकदुकूलादि वस्त्रकूर्पासकं तनु ॥ ११४
एतन्मण्डन मन्यद् वा पात्रयोः श्यामगौरयोः ।
यथोचितं विधातव्यमित्याह शिववल्लभः ॥ ११५

*अथ मसीमाह—*

शुद्धाः संयोगजाश्चोपवर्णाश्चेति त्रिधा मताः ।

*अथ शुद्धमस्युपयोगी द्रव्याण्याह—*

शुक्लस्य कठिनी द्रव्यं तथा नीलस्य कज्ज्वलम् ।
हरितालं च पीतस्य रक्तस्यापि च हिंगुलम् ॥ ११७

संयोग उपवर्णसञ्ज्ञकमसीद्वयं तु वहुत्तर भेदान्न लिखितम् ।
सङ्गीतार्णवचन्द्रिकायां सर्वमप्यस्ति जिज्ञासुना जनेन ततो ज्ञेयम् ॥

*अथ हरितालस्य महिमानमाह—*

हरितालो देवमय स्तद् विना स्यान्मसी वृथा ।

*हरिताले के देवास्तिष्ठन्ति तदाह—*

हकारः शङ्करः प्रोक्तो रेफोऽग्निः षण्मुखो मतः ।
ईकारश्च तु ताकारो ब्रह्मानन्द लकारकः ।
एते देवगणा एवं हरिताले व्यवस्थिताः ॥ ११९

*अथ हरितालस्य अभिमन्त्रणफलमाह—*

वर्णिका ग्रहणार्थत्वं निर्मितोऽसि स्वयं भुवा ।
सर्वसिद्धिप्रदो नान्यै सर्वदेवैश्च वन्दितः ॥
सर्व पापहरः साख्याद्धरिताल नमोस्तु ते ।
तस्मात् प्रयच्छ मे सिद्धिं सर्वदेवमय प्रभो ॥ १२१

*अथ वेशनिर्णयमाह—*

शुद्धो विचित्रो मलिन स्त्रिविधोवेश उच्यते ।
येषां ये उचितो वेशः क्रमातदपि कथ्यते ॥ १२२
धर्मकर्मणियुक्तानां पुंसां वा योषितामपि ।
अमात्य-कंचुकि-श्रेष्ठ द्विज-सिद्ध पुरोधसाम् ।
इत्यादीनां तु वेशस्याच्छुद्ध भूषांशुकादिभिः ॥ १२३

विचित्र मलिन वेशपात्राणि वहुत्वान्न लिखितानि। तत्र श्रद्धालुना जनेन संगीतार्णवचन्द्रिकया ज्ञातव्यम् ॥

एवं वेशा बुधैः कार्या देश जाति वयोऽनुगा ।
उत्तमामध्यमानां तु नृणां स्त्रीणामथापि वा ॥ १२४

*अथ वेशान्तर्गतमाल्यस्य भेद चतुष्टयमाह—*

गर्भितं गुम्फितं चैव वेष्टितं लम्बितं तथा ।
माल्यं चतुर्धा वेशान्ता दृश्या दृश्यं तु गर्भितम् ॥१२५
केशोपरिष्टाद्ग्रथितं पुष्पं यद्गुम्फितं तु तत् ।
वेष्टितं यत्त मालाभिस्तदा वेष्टित मुच्यते ।
लम्बितं तद्वेणिचूड़ा कण्ठेष्वालम्बते तु यत् ॥ १२६

अथ चतुर्विधालंकारमाह—

चतुर्विधं तु विज्ञेयं नाट्येष्वाभरणं बुधैः ॥
आविद्धं वन्धनीयं च प्रक्ष्येप्यं रोपितं तथा ॥ १२७

अथ विद्धादि अलंकाराणां लक्षणमाह—

विद्धेनाऽवयवेनापि ध्रियते भूषणं तु यत् ।
तदा विद्धमिति प्रोक्तं नासाकर्णादि भूषणम् ॥ १२८
ग्रथितं पट्टसूत्राद्यै निर्वद्धमचलं तु यत् ।
वन्धनीयं तदाख्यातं काञ्चीसूत्राङ्गदादिकम् ।
स्वनन्ति चल नाद्यानि तानि प्रक्षेप्यमुच्यते ॥ १२९
नूपुरं वलयादिनि वासांसि विविधानि च ।
यज्ञोपवीताद्यारोप्य लम्बते यत्तनौ धृतम् ॥ १३०
देशे देशे तु यान्यानि क्रियन्ते भूषणानि तु ।
तानि सर्वाणि नोक्तानि ग्रन्थविस्तरभीतितः ।
तत्र ये श्रद्धालवस्ते संगीतार्णवचन्द्रिकया विदन्तु ॥ १३१

अथ नाट्यभाषामाह—

संस्कृतं प्राकृतं चेति नाट्यभाषा द्विधा मता ।
भाषोपभाषाहीनातिभाषेति प्राकृतं त्रिधा ।
भाषाणां लक्षणं नोक्तं सर्वं विस्तर-शंकया ॥ १३२

अथ नाट्यवृत्तिमाह—

भारत्यारभटी चैव सात्वती कैशिकी तथा ।
चतस्रो वृत्तयो ह्येताः सर्व नाट्यस्य मातृकाः ॥ १३३

अथ भारत्यादि नाट्यवृत्तीनां वेदोत्पत्तिकथनम्—

ऋग्वेदाद्भारती जाता यजुर्वेदा च सात्वती ।
अथर्वणादारभट्टी सामवेदात्तु कैशिकी ॥ १३४

*अथ भारत्यादीनां महिमानमाह—*

गीतं वाद्यं तथा नृत्यं वृत्तिहीनं न शोभते।
अतो वृत्तिर्विजानीयादेताः भरतभाषिताः॥ १३५

*अथ नर्त्तकस्य रङ्गभूमिप्रवेशप्रकारमाह—*

सभाजन-मनोहारी पातं रङ्गभुवं विशेत्।
ततः पुष्पाञ्जलिं रङ्गं मध्यतो विकिरेदपि।
स्वयं चतुर्मुखः साक्षाद्रङ्गपीठ मधिष्ठितः॥ १३६

*अथ सभाजनानां मध्ये केषां किमपेक्षितं—*

पण्डिता गतिमिच्छन्ति भावमिच्छन्ति भूभुजः।
युवानो रूपमिच्छन्ति शृङ्गार मितरे जनाः॥ १३७

*अथ नर्त्तकस्य नृत्यप्रकारमाह—*

नानाविधैर्यथापुष्पैर्माल्यं ग्रन्थाति माल्यकृत्।
अङ्गोपाङ्गै रसैर्भावै स्तथानाट्यं प्रदर्शयेत्॥ १३८

*अथ नृत्ये वर्जनीयमाह—*

लज्जाकरं तु यत्किंचित्तद्रङ्गे परिवर्जयेत्।
पितृपुत्रबधौ युद्धं राज्य वेशादि... ... ...॥ १३६

*अथ नाट्यरञ्जकस्याभिनयनिर्णयमाह—*

याम मात्रं समाप्यं यन्नाट्यं रागविवर्द्धनम्।
दीर्घं विरागजनक मतो नाट्यं विवर्जयेत्॥ १४०
निद्रयापीड़िताङ्गनां रसवोधो न जायते॥

*अथ साधुवादनमाह—*

अत्युत्साहं भवेत्पात्रं सभायाः साधुवादने।
अतः पात्रस्य दुर्नृत्यं सभायां य उदाहरेत्॥
स ब्रह्महा जायते वै बज्रं पतति मूर्द्धनि।
पतन्ति तस्याःनरके कुलान्युभयतो दश॥

तत्साधुवादनादन्यवचनं यः प्रयोजयेत् ।
गोवधस्य फलं प्राप्य स वै निरय मृच्छते ॥ १४३

*सभयाः प्रथमोत्थान निषेधमाह—*

पुरो गत्वा सभाभङ्ग' यः करोति नराधमः ।
स मातृहा पितृघ्नश्च शिवद्रोही च जायते ॥ १४४

*अथ हस्तक विषयमाह तत्र षड्विधाङ्गान्याह—*

शिरःकरोऽथहृदयं जठरं पार्श्वयुग्मकम् ।
कटिश्चेति षड़ङ्गानि कथितानि शरीरिणः ॥ १४५

*अथ तेषां षड़ङ्गानां मध्येऽङ्गोत्तमत्वात् प्रथमतः शिरोभेदमाह-*

आकम्पितं कम्पितं च धूतं विधूत मेवच ।
परिवाहित माधूत मवधूतं तथाञ्चितम् ॥
निकुञ्चितमयं वृत्तमुत्क्षिप्तं चाप्यधो मतम् ।
लौलितं प्राकृतं चेति चतुर्दशविधं शिरः ॥ १४७

*अथ आकम्पितादि चतुर्दशशिरो भेदानां मध्ये परिवाहितमाह*

शिरस्तोमण्डलाकार भूषणात्परिवाहितम् ।
विचारे विस्मये हर्षे स्मिते क्रोधेऽनुमोदके ॥ १४८

अन्ये त्रयोदश भेदा ग्रन्थवाहुल्य भयादुपेक्षिताः । ते तु संगीतार्णवचन्द्रिकायां सन्ति । तत्र येऽभिलाषिताः, ते ततो जानन्तु ।

*अथ हस्तस्य हस्तकभेदानाह—*

पताकास्त्रिपताकोऽर्द्ध चन्द्राख्यः कर्त्तरी मुखः ।
अरालमुष्टशिखर - कपित्थ - खटकामुखाः ॥ १४९
शुकतुण्डः काङ्गुलश्च पद्मकोशोऽलपल्लवः ।
शूरी(सूची)मुखः सर्पशिरा श्चतुरो मृगशीर्षकः ॥ १५०
हंसास्यो हंसपक्षश्च भ्रमत्तो मुकुलस्तथा ।
उर्णनाभश्च संदंश-स्ताम्रचूड़ोऽपरः करः ।
अमीचासंयुता हस्ताश्चतुर्विंशतिरीरिता ॥ १५१

*अथ पताका हस्तादिभेदद्वयमाह—*

पताकः प्रकृति त्वेन वहुधा संप्रकीर्त्तितः।
विनियोगः वहुत्वा च प्रथमं स विधीयते॥ १५२
अंगुष्ठो यस्य वक्रः सन् तर्जनी मूल संश्रितः।
ऋजवोऽङ्गुलयः श्लिष्टः सपताक इति स्मृतः॥ १५३

*अथ त्रिपताकाहस्तमाह—*

पताकः स्त्रिपताकः स्या द्वक्रिताचेदनामिका।
त्रिपताके कनिष्ठाचेद् बक्रिताऽर्धपताकिका॥ १५६

एतेषां विनियोगस्तु ग्रन्थवाहुल्य भयादुपेक्षिताः। ते तु संगीतार्णवचन्द्रिकायां सन्ति ततो विज्ञातव्यः। हृदया चतुराङ्गानां लक्षणं वहुत्वान्नलिखितम्। तदपि तत्राऽस्ति॥

*अथ संख्यासूचका ये ततः कांश्चित् प्रचक्ष्महे—*

शूच्याद्यकर्त्तर्यातिशिखेन तु त्रिसंख्यकम्।
चतस्रस्तु पताकेन पञ्चकं मुकुलेन तु॥ १५६

*अथ नर्त्तकस्य हस्तक करण कालीन चेष्टितमाह—*

अङ्गे नालम्बयेद्गीतं हस्तेनाप्य प्रदर्शनम्।
चक्षुर्भ्यां भावयेद्भावः पादाभ्यां ताल निर्मितम्॥१५७

इतरेषां सर्वहस्तकानां लक्षणानि॥

कोटि पद्मावुर्द—महापद्म परार्द्ध संख्यकानि सन्ति। तेषु निरुच्यमानेषु ग्रन्थवाहुल्यं जायते। अतस्तानि नोक्तानि। ये तत्व-जिज्ञासवस्ते संगीतार्णवचन्द्रिकायां विदन्तु॥

*अथ चारी स्वरूपमाह—*

एकपादप्रचारो यः स चारीति निगद्यते।
सेयं चारी द्विधा ज्ञेया भौमाख्या काशिकी मता॥

मार्गदेशी विभेदेन प्रत्येकं ताअपि द्विधा ।
प्रत्येकं लक्षणं त्वासां नोक्तं विस्तरशङ्कया ॥ १५९

*अथाभिनया एव रसोत्पत्तिहेतव इति दर्शयितुमाह—*

नूनं त्वभिनयाःसर्वे रसस्य व्यञ्जका अमी ।
नापेक्षन्त जातिधर्मान् देशकाल वयःक्रमान् ॥ १६०

*अथ रसस्य आत्मस्वरूपतामाह—*

तस्माद्रसो विभुर्नित्यः सत्यज्ञानमयो हि सः ।
आनन्दरूपस्तेनाय मात्मनो नातिरिच्यते ॥
नादात्मव्यतिरेकेण रसनामास्ति कश्चन ।
आनन्दरूप स्तेनाह रसोवै स इति श्रुतिः ॥ १६२

*अथ नान्दीलक्षणमाह—*

गङ्गा गणपतिः सौमः सुधानन्दो जयाशिषः ।
एतै र्नामपदै र्भव्यैर्नान्दी कार्या विचक्षणैः ॥ १६३

*अथ नान्दीप्रयोजनमाह—*

आशीर्वचन संयुक्ता नान्दी विघ्नोपशान्तये ।
सूत्रधारः पठेन्नान्दीं मध्यम-स्वर-माश्रितः ॥ १६४

*अथ अशुद्ध गीतनृत्य निषेधमाह—*

अशुद्ध नृत्यगीतेन गोष्ठीं न कुरुते बुधः ।
महापातकिनः सङ्गात्संसर्गा-त्पातकी भवेत् ॥ १६५

*अथ संगीतं वृत्तरूपकत्वेन कल्पयति—*

संगीत पादपस्येहशब्दा शाखा पदं दलम् ।
गीतं तु कोरकःपुष्पं गमकस्तु रसः फलम् ॥ १६६
गीतवाद्य नृत्येषु बहुतर भेदान्तराणि सन्ति ।
तानि भरतकोहलादिकृत ग्रन्थेभ्यो विज्ञेयानि ॥

चक्रे नृपो यां भुविकेरलायां श्री नीलकण्ठोऽपि च नाट्यपूर्वाम् ।
मनोरमाख्यां तु ययौ समाप्तिं तस्यामसौ पञ्चम एव पादः ॥

अङ्के भर्गमिते गजेश-नृपतेर्मासे तु चैत्रे शिते ।
पक्षे पञ्चदशी तिथौ नरपतेः श्री-दिव्यसिंहस्य च ।
चक्रे नाट्यमनोरमा च भरतः श्रीकेरलोर्वीपतिः ।
सङ्गीतार्णवचन्द्रिकान्तरगता श्री नीलकण्ठः कृती ॥
केरलावनिप-कल्पपादपं नीलकण्ठमुपजीव्य भूसुरः ।
नालमाक्षिपतु सर्वदा रथो यस्तु नाम्नि रघुनाथविश्रुतिः ॥
भीमस्यापि रणेभङ्गो मुनेरपि मतिभ्रमः ।
यदि शुद्धमशुद्धं वा मम दोषो न विद्यते ॥
ग्रन्थकर्त्ता स्वयं व्यासो लेखकस्तु विनायकः ।
तयोस्तु स्खलिताबुद्धिर्मनुष्याणां च का कथा ॥
वारे भूमिसुतस्य मासि च मधौ पक्षे क्षपेशोदये ।
लक्ष्मीनायक वासरे नरपतेः श्रीदिव्यसिंहस्य च ॥
अङ्के सूर्यमिते त एव रघुणा श्रीकेरलोर्वीपते-
र्वाचा-नाट्यमनोरमा तु लिखिता श्रीनीलकण्ठस्य च ॥

॥ श्रीकृष्णः शरणम् ॥



